नन्वेवंधनादित्यागेकथंदेहनिर्वाहइत्याशंक्याह पूर्वेति दृष्टसुखार्थंऐहिकोयत्नोव्यर्थइत्यर्थः ॥ ४७ ॥ ननुपूर्वकर्मापिदृष्टयत्नापेक्षमतआह एवमिति यथारोगारोग्यादिजानिदुःखसुखानिअप्रार्थितान्येवल
भ्यंते एवमेवप्रियाप्रियसंबंधादीनिलाभनाशादीनिचलभ्यंतइत्यनर्थकोयत्नइत्यर्थः ॥४८॥ एतांयच्चकामसुखमित्यादिनाउक्तां सुखंनिरुद्योगंयथास्यात्तथा गुणान्वितः वैतृष्ण्यान्वितः जुगुप्सेत निंदेत कामान्
विषयान् कामात्हटात् क्रोधंकुर्वीतेत्यपिवापाठः ॥४९॥ वृत्तोनित्यनिष्पन्नः मृत्युःजन्ममरणाख्यसंसारद्वारभूतः मनोभवः कामः सएवकेनचिन्निमित्तेनप्रतिहतःक्रोधरूपेणपरिणमतेइत्यर्थः ॥५०॥ यदेति
त्रिविधाःकामाः स्थूलसूक्ष्मकारणोपाधिभोग्याविषयाः तत्रस्थूलानांत्यागःसंगदर्जनेनस्थवीयानेव सूक्ष्माणांवासनामयानांत्यागोवैराग्यदार्ढ्यात्सर्वविषयस्मरणस्याप्यभावः एतानपिगुरुहृदयुक्त्यापरित्यज्य
हार्दाकाशाख्यंकारणंब्रह्मप्रविष्टोयोगी अत्रहिसर्वेकामाःसमाहिताःयच्चास्येहास्तियच्चनास्तिसर्वंतदत्रगत्वाविंदतइतिश्रुतेर्वर्तमानंत्रिलोक्यंतर्गतमतीतानागतंचकामजातंसंकल्पसमकालोत्थितंपुरोवर्तमानमेवप
श्यन्कदाचिद्वैराग्यमांद्यान्मुखेनानस्तानपिसंहरेत् तथाचसूत्रंभगवतःपतंजलेः स्थान्युपनिमंत्रणेसंगस्मयाकरणंपुनरनिष्टप्रसंगादिति व्याख्यातंचैतद्भगवताबादरायणेन तत्रमधुमतीभूमिसाक्षात्कुर्वतोब्राह्म
णस्यस्थानिनोदेवाःसत्वबुद्धिमनुपश्यंतःस्थानैरुपनिमंत्रयंते भोइहास्यतांकमनीयोयंभोगः कमनीयेयंकन्या रसायनमिदंजरामृत्यूबाधते वैहायसमिदंयानं अमीकल्पद्रुमाः पुण्यामंदाकिनी सिद्धामहर्षयः
उत्तमाअनुकूलाश्चअप्सरसः दिव्येश्रोत्रचक्षुषी वज्रोपमःकायः स्वगुणैःसर्वमिदमप्यर्जितमायुष्मताप्रतिपद्यतामिदमक्षयमजरममरंस्थानंदेवानांप्रियमित्येवमभिधीयमानःसंगदोषान्भावयेत् घोरेषुसंसा

**पूर्वदेहकृतंकर्मशुभंवायदिवाशुभं॥ प्राज्ञंमूढंतथाशूरंभजतेयादृशंकृतं॥४७॥ एवमेवकिलैतानिप्रियाण्येवाप्रियाणिच ॥ जीवेषुपरिवर्तंतेदुःखानिचसुखा**
**निच॥४८॥ एतांबुद्धिंसमास्थायसुखमास्तेगुणान्वितः ॥ सर्वान्कामान्जुगुप्सेतकामात्कुर्वीतपृष्ठतः ॥ ४९ ॥ वृत्तएषहृदिप्रौढोमृत्युरेषमनोभवः ॥ क्रो**
**धोनामशरीरस्थोदेहिनांप्रोच्यतेबुधैः॥५०॥ यदासंहरतेकामान्कूर्मोंगानीवसर्वशः॥ तदात्मज्योतिरात्मायमात्मन्येवप्रपश्यति ॥५१॥**

रागारेषुपच्यमानेनमयाजननमरणांधकारेविवर्तमानेनकथंचिदासादितःक्लेशतिमिरविनाशीयोगप्रदीपः तस्यचैतेतृष्णायोनयोविषयवायवःप्रतिपक्षाः सखल्वहंलब्धालोकःकथमनयाविषयमृगतृष्ण
यावंचितःतस्यैवपुनःप्रदीप्तस्यसंसाराग्नेरात्मानमिंधनीकुर्यामिति स्वस्तिवःस्वप्नोपमेभ्यःकृपणजनप्रार्थनीयेभ्योविषयेभ्यइत्येवंनिश्चितमतिःसमाधिंभावयेत् संगमकृत्वास्मयंकुर्यात् एवमहंदेवानांप्रा
र्थनीयइतिस्मयादयंमुस्थितंमन्यतयामृत्युनाकेशगृहीतमात्मानंनभावयिष्यति तथाचास्यच्छिद्रांतरप्रेक्षीनित्यंयत्नोपचर्यःप्रमादोलब्धविवरःक्लेशानुत्तंभयिष्यति ततश्चपुनरनिष्टप्रसंगइति तस्मात्सर्वशः
सर्वान्त्रिविधानपिकामान् संहरेत् कूर्मोंगानीतिदृष्टांतः कामानांस्वरूपादनन्यत्वंस्वाधीनोत्पत्तिप्रलयत्वंचदर्शयति यदाकामान्सर्वान्संहरेत्तदाअयमात्माहंप्रत्ययगोचरोजीवः आत्मन्येवअपेनसर्वोपाधौ
स्वस्वरूपेणैवआत्मज्योतिःप्रत्यगभिन्नंचिन्मात्रंपश्यति अयमर्थः यथाजागरेघटंसूर्यादिनाज्योतिषापश्यति गाढांधकारेतुवाचैवज्योतिषापश्यति स्वप्नेतुआलोकेंद्रियज्योतिषोरभावाद्वासनामयस्यघटस्यप्रत्य
गात्मज्योतिषैवप्रकाशइतिप्रसाधितंज्योतिर्ब्राह्मणे अत्रायंपुरुषःस्वयंज्योतिरिति तेनतत्रकारणाभावेसिद्धेसुषुप्तौवासनामयस्यप्रपंचस्यापिनाशेदृश्याभावाद्दृङ्मात्रंप्रकाशते एवंसमाधावपिसंप्रज्ञातेकरणाभावः
असंप्रज्ञातेकर्मकरणयोरभावाद्द्रष्टृत्वनिवृत्तौदृङ्मात्रंशिष्यतेइति प्रसीदतीतिपाठेकार्यकरणसंपर्कजंकालुष्यंत्यजतीत्यर्थः किंचिदेवममत्वेनेतिश्लोकंकेचिदितउत्तरंपठंति तदामधुमत्यांयोगभूमौउपस्थि
तेषुविषयेषुवैराग्यार्थमिदंवचनमितिज्ञेयं ॥ ५१ ॥

असंप्रज्ञातावस्थामेवप्रपंचयतिद्वाभ्यां नबिभेतीति ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेतिश्रुतेर्भयादेर्मनोधर्मत्वान्मनसश्चलीनत्वाद्यदाभयादिरहितः स्थाणुवदचंचलोभवति तदास्मादन्येजनानबिभ्यति अयंचब्रह्मसंपद्यते तथाचश्रुतिः यदापंचावतिष्ठंतेज्ञानानिमनसासह बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिमिति ॥ ५२ ॥ सत्यंव्यावहारिकंदेहादि अनृतंस्वप्नसबीजसमाधिकालिकंप्रातिभासिकंचदेहादि प्रशांतात्माप्रकर्षेणशांतउपरतःआत्माचित्तंयस्यसप्रशांतात्मा ॥ ५३ ॥ व्युत्थानावस्थामाह यदानेति पापकं हिंसनं ॥ ५४ ॥ एषास्थितिस्तृष्णात्यागेनैवलभ्येत्याख्यायिकापूर्वकमाह यादुस्त्यजेत्यादिना ॥ ५५ ॥ कृच्छ्रकालेदुःखकाले सनातनंधर्मंनित्यप्रसिद्धंयोगं ॥ ५६ ॥ संकेतेइति आस्थापयत्व्यवस्थापितवती तीव्रदुःखमेववैराग्यहेतुरितिभावः ॥ ५७ ॥ उन्मत्ताविकारवती अनुन्मत्तंनिर्विकारंकांतंस्वामिनमंतर्यामिणं अन्ववसं वसआच्छादने आर्षःपदव्यत्ययः अहंकारधर्मकामादिकमनुलक्षीकृत्यआच्छादितवती अंतिकेहृदयकोशेरमणंआनंदप्रदं एषह्येवानंदयातीतिश्रुतेः मरणमित्यपपाठः ॥ ५८ ॥

नबिभेतियदाचायंयदाचास्मान्नबिभ्यति ॥ यदानेच्छतिनद्वेष्टिब्रह्मसंपद्यतेतदा ॥ ५२ ॥ उभेसत्यानृतेत्यक्त्वाशोकानंदौभयाभये ॥ प्रियाप्रियेपरित्यज्यप्रशांतात्माभविष्यति॥५३॥ यदानकुरुतेधीरःसर्वभूतेषुपापकं॥ कर्मणामनसावाचाब्रह्मसंपद्यतेतदा॥५४॥ यादुस्त्यजादुर्मतिभिर्यानजीर्यतिजीर्यतः॥योसौप्राणांतिकोरोगस्तांतृष्णांत्यजतःसुखं॥५५॥ अत्रपिंगलयागीतागाथाश्रूयंतिपार्थिव॥ यथासाकृच्छ्रकालेपिलेभेधर्मंसनातनं ॥ ५६ ॥ संकेतेपिंगलावेश्याकांतेनासीद्विनाकृता॥ अथकृच्छ्रगताशांतांबुद्धिमास्थापयत्तदा॥५७॥ पिंगलोवाच उन्मत्ताहमनुन्मत्तंकांतमन्ववसंचिरं॥ अंतिकेरमणंसंतंनैनमध्यगमंपुरा ॥५८॥ एकस्थूणंनवद्वारमपिधास्याम्यगारकं ॥ काहिकांतमिहायांतमयंकांतेतिमंस्यते ॥ ५९ ॥ अकामांकामरूपेणधूर्तानरकरूपिणः ॥ नपुनर्वंचयिष्यंतिप्रतिबुद्धास्मिजागृमि ॥ ६० ॥

एकाअविद्यैवस्थूणेवविधारिकायस्यतदेकस्थूणं नवश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनोबुद्धिकामकर्माणिविषयप्राप्तिद्वाराणियस्यतत् नवद्वारंअपिधास्यामिविद्याबलेनाच्छादयामि अगारमिवचिदात्मोपलब्धिस्थानंदेहादिसंघातं काहीति विभेदजनकेःज्ञानेनाशमात्यंतिकंगते आत्मनोब्रह्मणोभेदमसंतंकःकरिष्यतीतिविष्णुपुराणोक्तेर्दर्पणापगमेबिंबप्रतिबिंबयोरिवाविद्यानाशेईशजीवयोर्भेदाभावात् इहहार्दाकाशेआयांतंचिन्मात्ररूपेणाविर्भवंतंप्रत्यगनन्यमीशंअयंकांतइतिकामंस्यतेनकापीत्यर्थः तथाचश्रुतिः यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिविद्यावस्थायांमंतृमंतव्यभावाभावेनभेदमपवदति कांतेतिसंधिरार्षः ॥ ५९ ॥ अकामांआत्मलाभेनसर्वकामावाप्तेर्निरिच्छां कामरूपेणकामुकरूपेण प्रतिबुद्धाज्ञातात्मतत्त्वा जागृमिजागर्मि अविद्यानिद्रोच्छेदात् ज्ञाततत्त्वोनविषयैराकृष्यतइत्यर्थः ॥ ६० ॥

अनर्थोधनाद्याशयावैक्लव्यंतदेवअर्थोभवेत् आशायानिरन्वयोच्छेदहेतुत्वेनसुखायापिस्यात् तत्रहेतुः दैवात् देवस्यानुग्रहात् निरीश्वरवादिमतमनुरुध्याह पूर्वकृतेनवेति निराकारानिर्विषयज्ञानरूपा ॥ ६१ ॥ सुखमिति नैराश्यमेवपरंसुखंमोक्षाख्यपरसुखप्रापकं अशनंभोजनमाशोविषयभोगस्तद्रहितामनाशां भोगार्थंहि धनाद्याशाभोगत्यागादुच्छिद्यतेइत्यर्थः ॥ ६२ ॥ पर्यवस्थापितः आत्मतत्त्वेनिष्ठांप्रापितः ॥ ६३ ॥ इतिशांति० मोक्षध० नै० भा० चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥ ॥७॥ ॥७॥ पूर्वंजिताशोमोक्षमिच्छेदित्युक्तं संप्रतितत्रकालविलंबोनकर्तव्यइत्याहाध्यायेन अतीति अतिक्रामतिजरारोगादिभिर्नृणांपराभवंकुर्वति श्रेयःप्रशस्ततरं ॥ १ ॥ २ ॥ ३ ॥ मोक्षधर्माणांअर्थेषुकुशलः विचक्षणःऊहापोहकुशलः ॥ ४ ॥ यथार्थयोगंफलसंबंधमनतिक्रम्य ॥ ५ ॥ मु

अनर्थोहिभवेदर्थोदैवात्पूर्वकृतेनवा ॥ संबुद्धाहंनिराकारानाहमद्याजितेंद्रिया ॥ ६१ ॥ सुखंनिराशःस्वपितिनैराश्यंपरमंसुखं ॥ आशामनाशांकृत्वाहिसुखं स्वपितिपिंगला ॥ ६२ ॥ भीष्मउवाच एतैश्चान्यैश्चविप्रस्यहेतुमद्भिःप्रभापितैः ॥ पर्यवस्थापितोराजासेनजिन्मुमुदेसुखी ॥ ६३ ॥ इतिश्रीमहाभारते शांतिपर्वणिमोक्षधर्मपर्वणिब्राह्मणसेनजित्संवादकथनेचतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥ ॥७॥ युधिष्ठिरउवाच अतिक्रामतिकालेऽस्मिन्सर्वभूतक्षयावहे ॥ किंश्रेयःप्रतिपद्येततन्मेब्रूहिपितामह ॥ १ ॥ भीष्मउवाच अत्राप्युदाहरंतीममितिहासंपुरातनं ॥ पितुःपुत्रेणसंवादंतंनिबोधयुधिष्ठिर ॥ २ ॥ द्विजातेःकस्यचित्पार्थस्वाध्यायनिरतस्यवै ॥ बभूवपुत्रोमेधावीमेधावीनामनामतः ॥ ३ ॥ सोब्रवीत्पितरंपुत्रःस्वाध्यायकरणरतं ॥ मोक्षधर्मार्थकुशलोलोकतत्त्वविचक्षणः ॥ ४ ॥ पुत्रउवाच धीरःकिंस्वित्तातकुर्यात्प्रजानन्क्षिप्रंह्यायुर्भ्रश्यतेमानवानां ॥ पितस्तदाचक्ष्वयथार्थयोगंममानुपूर्व्यायेनधर्मंचरेयं ॥ ५ ॥ पितोवाच वेदानधीत्यब्रह्मचर्येणपुत्रपुत्रानिच्छेत्पावनार्थंपितॄणां ॥ अग्नीनाधायविधिवच्चेष्टयज्ञोवनंप्रविश्याथमुनिर्बुभूषेत् ॥ ६ ॥ पुत्रउवाच एवमभ्याहतेलोकेसमंतात्परिवारिते ॥ अमोघासुपतंतीपुकिंधीरइवभाषसे ॥ ७ ॥ पितोवाच कथमभ्याहतोलोकःकेनवापरिवारितः ॥ अमोघाःकाःपतंतीहकिंनुभीषयसीवमां ॥ ८ ॥ पुत्रउवाच मृत्युनाभ्याहतोलोकोजरयापरिवारितः ॥ अहोरात्राःपतंत्येतेननुकस्मान्नबुध्यसे ॥ ९ ॥ अमोघारात्रयश्चापिनित्यमायांतियांतिच ॥ यदाहमेतज्जानामिनमृत्युस्तिष्ठतीतिह ॥ सोहंकथंप्रतीक्षिष्येज्ञानेनापिहितश्चरन् ॥ १० ॥

निर्ध्यानभिक्षुः ॥ ६ ॥ अभ्याहतेमृत्युनाभितस्ताडिते परिवारितेजरयाव्याप्ते परितापितेइतिजीर्णपाठः अमोघासुआयुर्हरणेनसफलासुरात्रिषु ॥ ७॥८॥९॥ अहोवारात्रयश्चापीतिपाठे अहोइतिखेदे वाशब्दएवार्थेभिन्नक्रमः यांत्येवनतुतिष्ठंतीत्यर्थः नतिष्ठतिअपितुक्षणेक्षणेअर्वागायाति ज्ञानेनअपिहितः अनाच्छादितज्ञानकवचस्यहिमृत्युभयंनास्ति अहंतुतद्रहितःकथंनोद्विजेयमित्यर्थः अपिशब्दस्यभागुरिमतेनअकारलोपंकृत्वानञ्समासः जालेनापिहितइतिपाठेतुनअकारलोपादि जालेनमायावरणेनअपिहितआच्छादितः ॥ १० ॥

वंध्यंनिष्फलं ॥ ११ ॥ यदामृत्युरभ्येतितदाकःसुखंविंदेतेतिसंबंधः ॥१२॥ पुष्पाणिकाम्यकर्मफलानिमेषीणामार्तवानिवा आर्तवंविनापशूनांस्त्रीसंगेप्रवृत्त्यदर्शनात् विचिन्वंतंशास्त्रदृष्ट्याआघ्राणेनच उर णांमेषं ॥ १३ ॥ १४ ॥ १५ ॥ अनित्यंखल्विन्यत्रानिमित्तमितिपाठे आयुरियत्तावधारणकारणहीनं ॥ १६ ॥ मोहेनेति एषांपुत्रादीनां ॥ १७ ॥ सुप्तंव्याघ्रंमहौघेतिपाठे सुप्तंसैकतेमहौघामहानदीअ कालप्रवर्ती ॥ १८ ॥ संचिन्वानकंकुत्सितंसंचिन्वानंसंग्रहीतारं ॥ १९ ॥ कार्यंकर्तुमिष्टं कृताकृतंअर्धकृतं ईहातृष्णा ॥ २० ॥ फलंनप्राप्तंयेनतंफलमप्राप्तंनरं अप्राप्तकर्मफलमित्यर्थः कर्मसंज्ञितं वणिगित्यादिकर्मानुरूपसंज्ञावंतं ॥ २१ ॥ २२ ॥ २३ ॥ द्वयेनअंतकजराख्येन ॥ २४ ॥ एवंपुत्रादिपुवैराग्यमुक्त्वातेषांत्यागमप्याह मृत्योरिति ग्रामेस्त्र्यादिसंघेरतिरासक्तिरेवमृत्योर्मुखंवनेतुवासमात्रंगोष्ठ

रात्र्यांरात्र्यांव्यतीतायामायुरल्पतरंयदा ॥ तदैववंध्यंदिवसमितिविद्याद्विचक्षणः ॥ ११ ॥ गाधोदकेमत्स्यइवसुखंविंदेतकस्तदा ॥ अनवाप्तेषुकामेषुमृत्युरभ्ये तिमानवं ॥ १२ ॥ पुष्पाणीवविचिन्वंतमन्यत्रगतमानसं ॥ वृकीवोरणमासाद्यमृत्युरादायगच्छति ॥ १३ ॥ अद्यैवकुरुयच्छ्रेयोमात्वांकालोऽत्यगादयं ॥ अकृते ष्वेवकार्येषुमृत्युर्वैसंप्रकर्षति ॥ १४ ॥ श्वःकार्यमद्यकुर्वीतपूर्वाह्णेचापराह्णिकं ॥ नहिप्रतीक्षतेमृत्युःकृतमस्यनवाकृतं ॥ १५ ॥ कोहिजानातिकस्याद्यमृत्युका लोभविष्यति ॥ युवैवधर्मशीलःस्यादनित्यंखलुजीवितं ॥ कृतेधर्मेभवेत्कीर्तिरिहप्रेत्यचवैसुखं ॥ १६ ॥ मोहेनहिसमाविष्टःपुत्रदारार्थमुद्यतः ॥ कृत्वाकार्यम कार्यंवापुष्टिमेषांप्रयच्छति ॥ १७ ॥ तंपुत्रपशुसंपन्नंव्यासक्तमनसंनरं ॥ सुप्तंव्याघ्रोमृगमिवमृत्युरादायगच्छति ॥ १८ ॥ संचिन्वानकमेवैनंकामानामवितृ प्तकं ॥ व्याघ्रःपशुमिवादायमृत्युरादायगच्छति ॥ १९ ॥ इदंकृतमिदंकार्यमिदमन्यत्कृताकृतं ॥ एवमीहासुखासक्तंकृतांतःकुरुतेवशे ॥ २० ॥ कृतानांफलम प्राप्तंकर्मणांकर्मसंज्ञितं ॥ क्षेत्रापणगृहासक्तंमृत्युरादायगच्छति ॥ २१ ॥ दुर्बलंबलवंतंचशूरंभीरुंजडंकविं ॥ अप्राप्तंसर्वकामार्थान्मृत्युरादायगच्छति ॥ २२ ॥ मृत्युर्जराचव्याधिश्चदुःखंचानेककारणं ॥ अनुषक्तंयदादेहेकिंस्वस्थइवतिष्ठसि ॥ २३ ॥ जातमेवांतकोंतायजराचान्वेतिदेहिनं ॥ अनुषक्ताद्वयेनैते भावाःस्थावरजंगमाः ॥ २४ ॥ मृत्योर्वामुखमेतद्वैयाग्रामेवसतोरतिः ॥ देवानामेषवैगोष्ठोयदरण्यमितिश्रुतिः ॥ २५ ॥ निबंधनीरज्जुरेषायाग्रामेवसतो रतिः ॥ छित्वैनांसुकृतोयांतिनैनांछिंदंतिदुष्कृतः ॥ २६ ॥ नहिंसयतियोजंतून्मनोवाक्कायहेतुभिः ॥ जीवितार्थापनयनैःप्राणिभिर्नसहिंस्यते ॥ २७ ॥

मिवगोष्ठंवासस्थानं अरण्यंविविक्तदेशः तद्धिदेवानामिंद्रियाणांगवांगोष्ठमिवबंधनस्थानं गृहंत्यक्त्वाएकांतेध्यानपरोभवेदित्यर्थः लिंगव्यत्ययआर्षः ॥२५॥ यांतिमुक्तिमितिशेषः ॥ २६ ॥ नहिंसयति हिं सांनकारयतिनकरोतिचेत्यर्थः हेतुःश्राद्धादिनिमित्तैः कर्महेतुभिरितिपाठेपिसएवार्थः जीवितंअर्थाश्चअपनयंतितैर्हिंस्रस्तेनादिभिःप्राणिभिःसनहिंस्यतेनिमित्ताभावात् यथोक्तंवैष्णवे यःपरस्यनपापा निचिंतयत्यात्मनोयथा तस्यपापागमस्तातहेत्वभावान्नविद्यतेइति कर्मभिर्नसबध्यतइतिपाठेमनोवाक्कायजैरपध्यानपरुषोक्तिशस्त्रपाननादिभिःकरणभूतैःनबध्यतेसंबंधंनप्राप्नोति बध्यतइतिस्पष्टार्थः पाठः योहिंसयच्छतिप्राणानित्यपपाठः ॥ २७ ॥

मृत्युसेनांजराव्याधिरूपां सत्यंअबाधितात्मतत्त्वप्रापकत्वाद्योगधर्मं अमृतंमरणाभावः एतेन नतस्यरोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरमितिश्रुतेरर्थउक्तः कृतेसत्यमसत्याद्यमितिपाठे असत्यमज्ञानं
अद्यंभक्ष्यंयस्येत्यर्थः ॥ २८ ॥ सत्यव्रताचारः ब्रह्मप्राप्त्यर्थानिव्रतानियमनियमरूपाणिआचरतीतितथा सत्ययोगःचिदाभासरूपस्यजीवस्यप्रविलापनंतत्रपरायणः सत्यःप्रमाणभूतआगमोगुरुवेदवाक्यं
यस्यससत्यागमःश्रद्धावान् ॥ २९ ॥ देहेचित्ते मोहात्विषयपारवश्यात् सत्येनतद्वर्जनात्मकेनयोगेन तथाच मनएवमनुष्याणांकारणंबंधमोक्षयोः बंधायविषयासक्तंमुक्त्यैनिर्विषयंस्मृतमितिश्रुत्यर्थउक्तः
॥ ३० ॥ क्षेमीपरमुखार्थी अमर्त्यवत्हिरण्यगर्भवत् ॥ ३१ ॥ शांतियज्ञःनिवृत्तिमार्गाभ्यासः ब्रह्मयज्ञोनित्यमुपनिषदर्थचिंतनं वाग्यज्ञःप्रणवजपः मनोयज्ञःअकारोकारमकारार्धमात्राणांपूर्वपूर्वस्योत्त
रोत्तरत्रप्रविलापनं कर्मयज्ञःस्नानशौचगुरुशुश्रूषाद्यावश्यकधर्मानुष्ठानम् उदगायनेइतिदेवयानपथनिमित्तं उक्तपंचयज्ञपरोभविष्यामि दर्श्यमार्षम् ॥३२॥ अंतवद्भिरनित्यफलैः क्षेत्रयज्ञैःशरीरत्यागैः यथा

नमृत्युसेनामायांतींजातुकश्चित्प्रबाधते ॥ कृतेसत्यमसत्याज्यंसत्येत्यमृतमाश्रितं ॥ २८ ॥ तस्मात्सत्यव्रताचारःसत्ययोगपरायणः ॥ सत्यागमःसदादांतः
सत्येनैवांतकंजयेत् ॥ २९ ॥ अमृतंचैवमृत्युश्चद्वयंदेहप्रतिष्ठितं ॥ मृत्युरापद्यतेमोहात्सत्येनापद्यतेऽमृतं ॥३०॥ सोऽहंत्यहिंस्रःसत्यार्थीकामक्रोधबहिष्कृतः ॥
समदुःखसुखःक्षेमीमृत्युंहास्याम्यमर्त्यवत् ॥ ३१ ॥ शांतियज्ञरतोदांतोब्रह्मयज्ञेस्थितोमुनिः ॥ वाङ्मनःकर्मयज्ञश्चभविष्याम्युदगायने ॥३२॥ पशुयज्ञैःकथं
हिंस्रैर्मादृशोयष्टुमर्हति ॥ अंतवद्भिरिवप्राज्ञःक्षेत्रयज्ञैःपिशाचवत् ॥३३॥ यस्यवाङ्मनसीस्यातांसम्यक्प्रणिहितेसदा ॥ तपस्त्यागश्चसत्यंचसवैसर्वमवाप्नुयात्
॥३४॥ नास्तिविद्यासमंचक्षुर्नास्तिसत्यसमंतपः ॥ नास्तिरागसमंदुःखंनास्तित्यागसमंसुखं ॥३५॥ आत्मन्येवात्मनाजातआत्मनिष्ठोऽप्रजोपिवा ॥ आत्मन्येव
भविष्यामिनमांतारयतिप्रजा ॥३६॥ नैतादृशंब्राह्मणस्यास्तिवित्तंयथैकतासमतासत्यताच ॥ शीलंस्थितिर्दंडनिधानमार्जवंततस्ततश्चोपरमःक्रियाभ्यः ॥३७॥

कश्चित्पिशाचःप्राप्तंप्राप्तंशरीरंपूर्वपूर्ववासनावशाद्विषाग्न्युद्बंधनादिनापुनःपुनर्हिनस्तितद्वदहंपश्वादिशरीरमात्मदेहत्वेनपश्यन् कथंनाशयेयमित्यर्थः क्षत्रेत्यपिपाठः क्षत्रियाणामुचितैर्युद्धयज्ञतुल्यैरित्यर्थः
॥ ३३ ॥ यस्यवागादिपंचकंब्रह्मणिप्रणिहितंसमर्पितंससर्वंब्रह्मप्राप्नुयात् सत्यंचसवैपरमवाप्नुयादितिमूलपाठः ॥ ३४ ॥ विद्याग्रंथज्ञानंब्रह्माकाराचरमांतःकरणवृत्तिश्चज्ञानापरपर्याया ॥ ३५ ॥ आश्रमक्र
मंपित्राप्रोक्तंनिरस्यति आत्मनीति आत्मनिब्रह्मणिआत्मनाब्रह्मरूपेणजातःनपित्रामातरि आत्मनिष्ठोब्रह्मभूतः अप्रजोऽनपत्यः वाशब्दएवार्थे आत्मन्येवब्रह्मण्येवभविष्यामिनजायायांपुत्ररूपेण प्रजासंत
तिः ॥ ३६ ॥ एकताएकाकित्वं शीलंश्लाघनीयंवृत्तं दंडनिधानंवाङ्मनःकायैर्हिंसात्यागः ॥ ३७ ॥

गुहांवुद्धिम् ॥ ३८ ॥ ३९ ॥ इतिशांतिप०मो०नै०भा०पंचसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥ ॥ ७ ॥ ॥ ५ ॥ युवैवमोक्षार्थयतेतेत्युक्तंतत्रमोक्षसाधनंयज्ञादिद्वाराधनमेवनि धनानांतुदुर्लभोमोक्षइतिमन्वानःपृच्छति धनिनइति धनिनांकःकिंरूपः केनप्रकारेणसुखदुःखयोर्मुक्तिसंसारयोरागमः कथंचनिर्धनानांसुखदुःखागमइत्यर्थः स्वतंत्रिणःस्वशास्त्रानुसारिणः ॥ १ ॥ अमृत त्वस्यतुनाशास्तिवित्तेनत्यागेनैकेअमृतत्वमानशुरितिश्रुत्यनुसारादकिंचनाएवमुच्यंतेनतुधनिनइत्युत्तरयति अत्रापीति शंआत्मसुखंतेनपाकःरागद्वेषादिराहित्यान्निर्मलः शंपाकस्तर्ककेधृष्टेमुनिजिच्चतुरं गुलेइत्यनेकार्थः तेनशंपाकेनयद्गीतंतन्मांप्रतिकश्चिदब्रवीदितिद्वयोःसंबंधः ॥ २ ॥ कुचैलेनकुवस्त्रेण निर्धनत्वादन्नाच्छादनहीनइत्यर्थः ॥ ३ ॥ ४ ॥ अभिसंनयेत्दैवंयदिप्रापयेत्तर्हिनसंहृष्येदित्यादिना

किंतेधनैर्बांधवैर्वापिकिंतेकिंतेदारैर्ब्राह्मणयोमरिष्यसि॥ आत्मानमन्विच्छगुहांप्रविष्टंपितामहास्तेक्कगताःपिताच ॥ ३८ ॥ भीष्मउवाच पुत्रस्यैतद्वचःश्रु त्वायथाकार्षीत्पितानृप॥ तथात्वमपिवर्तस्वसत्यधर्मपरायणः॥३९॥ इतिश्रीमहाभारतेशांतिपर्व०मोक्षधर्म०पितापुत्रसंवादकथनेपंचसप्तत्यधिकशतत मोऽध्यायः॥१७५॥ ॥७॥ युधिष्ठिरउवाच धनिनश्चाधनायेचवर्तयंतेस्वतंत्रिणः॥ सुखदुःखागमस्तेषांकःकथंवापितामह ॥ १ ॥ भीष्मउवाच अत्राप्युदाहरंतीममितिहासंपुरातनं ॥ शंपाकेनेहमुक्तेनगीतंशांतिगतेनच ॥ २ ॥ अब्रवीन्मांपुराकश्चिद्ब्राह्मणस्त्यागमाश्रितः॥ क्लिश्यमानःकुदारेणकुचैलेन बुभुक्षया॥ ३ ॥ उत्पन्नमिहलोकेवैजन्मप्रभृतिमानवं॥ विविधान्युपवर्ततेदुःखानिचसुखानिच ॥ ४ ॥ तयोरेकतरेमार्गेयदेनमभिसन्नयेत् ॥ नसुखंप्राप्यसं हृष्येन्नासुखंप्राप्यसंज्वरेत् ॥ ५ ॥ नवैचरसियच्छ्रेयआत्मनोवायदीशिषे ॥ अकामात्मापिहिसदाधुरमुद्यम्यचैवह ॥ ६ ॥ अकिंचनःपरिपतन्सुखमास्वाद यिष्यसि॥ अकिंचनःसुखंशेतेसमुत्तिष्ठतिचैवह॥७॥ आकिंचन्यंसुखंलोकेपथ्यंशिवमनामयं॥ अनमित्रपथोह्येषदुर्लभःसुलभोमतः॥८॥ अकिंचनस्यशुद्ध स्यउपपन्नस्यसर्वतः॥ अवेक्षमाणस्त्रींल्लोकान्नतुल्यमिहलक्षये॥९॥ आकिंचन्यंचराज्यंचतुलयासमतोलयं॥ अत्यरिच्यतदारिद्र्यंराज्यादपिगुणाधिकं ॥१०॥

संबंधः मार्गइति प्रथमांतपाठेतुसंनयेत्संप्राप्नुयात् ॥ ५ ॥ नवैइतिकामादिधर्मवानात्माचित्तंकामात्मा कामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेतिश्रुतेः त्वंतुस्वरूपेणअका मात्मापिमनस्तादात्म्यात्भ्रांत्यातमायःपिंडवत्कामात्मेवसन्धुरमुद्यम्यधैर्येणयोगांगगणभारंचोढ्वाश्रेयःमोक्षंप्रतिनचरसिनाभिमुखोभवसियत्तत्रकिंहेतुरात्मनश्चित्तस्यनईशिषेनईश्वरोभवसि उपालंभोयं तेनचित्तस्यस्वाधीनत्वात्श्रेयआचरेदित्यर्थः ॥६॥ नास्तिकिंचनधनदारादिकंयस्यसःअकिंचनः परितःपतन्गच्छन् अनिकेतश्चरन्नित्यर्थः ॥७॥ पथ्यंमोक्षमार्गादनपेतं अनामयंनिर्विघ्नं अनमित्रपथःशत्रु वर्जितःपंथाः दुर्लभःकामिनां सुलभःपारतंत्र्याभावात् ॥ ८ ॥ उपपन्नस्यवैराग्यसंपन्नस्य ॥ ९ ॥ १० ॥

गुणाधिक्यमेवाह आकिंचन्येचेति ॥ ११ ॥ नचारिष्टइत्यत्रनचादित्यइत्यपपाठः अरिष्टश्चोराद्युपप्लवः ॥ १२ ॥ अनुपस्तीर्णेशय्याहीनेभूतलेशेतेतं उपधानंशीर्षोपधानं ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ अभिजातःउत्तमवंश्यः ॥ १७ ॥ त्रिभिःधनरूपकुलैः भोगानभोग्यधनादीनविसृज्यव्ययीकृत्येतिसार्धश्लोकः परस्वानामादानंचौर्यं ॥ १८ ॥ प्रतिषेधंतिदंडयंति लुब्धाव्याधाः ॥ १९ ॥ संस्पर्शजानि दाहच्छेदादीनि ॥ २० ॥ तेषांध्रुवाणामवश्यंभाविनांपरमदुःखानां बुध्याज्ञानेनभैषज्यंप्रतीकारमाचरेत्कुर्यात् किंकृत्वा अध्रुवैर्देहादिभिःसह लोकधर्मपुत्रैषणादिरूपमवज्ञायधिक्कृत्य ॥ २१ ॥ २२ ॥

आकिंचन्येचराज्येचविशेषःसुमहानयं॥ नित्योद्विग्नोहिधनवान्मृत्योरास्यगतोयथा॥ ११ ॥ नैवास्याग्निर्नचारिष्टोनमृत्युर्नचदस्यवः॥ प्रभवंतिधनत्यागाद्विमुक्तस्यनिराशिषः॥ १२॥ तंवैसदाकामचरमनुपस्तीर्णशायिनं॥ बाहूपधानंशाम्यंतंप्रशंसंतिदिवौकसः॥ १३॥ धनवान्क्रोधलोभाभ्यामाविष्टोनष्टचेतनः॥ तिर्यगीक्षःशुष्कमुखःपापकोभ्रुकुटीमुखः ॥ १४ ॥ निर्दशन्नधरोष्ठंचक्रुद्धोदारुणभाषिता॥ कस्तमिच्छेत्परिद्रष्टुंदातुमिच्छतिचेन्महीं ॥ १५ ॥ श्रियात्यभीक्ष्णंसंवासोमोहयत्यविचक्षणं ॥ सातस्यचित्तंहरतिशारदाभ्रमिवानिलः ॥ १६ ॥ अथैनंरूपमानश्चधनमानश्चविंदति ॥ अभिजातोस्मिसिद्धोस्मिनास्मिकेवलमानुषः॥ १७॥ इत्येभिःकारणैस्तस्यत्रिभिश्चित्तंप्रमाद्यति ॥ संप्रसक्तमनाभोगान्विसृज्यपितृसंचितान् ॥ परिक्षीणःपरस्वानामादानंसाधुमन्यते॥ १८॥ तमतिक्रांतमर्यादमाददानंततस्ततः॥प्रतिषेधंतिराजानोलुब्धामृगमिवेषुभिः ॥ १९॥ एवमेतानिदुःखानितानितानीहमानवं ॥ विविधान्युपपद्यंतेगात्रसंस्पर्शजान्यपि॥ २०॥ तेषांपरमदुःखानांबुद्ध्याभैषज्यमाचरेत् ॥ लोकधर्ममवज्ञायध्रुवाणामध्रुवैःसह॥ २१॥ नात्यक्त्वासुखमाप्नोतिनात्यक्त्वाविंदतेपरं ॥ नात्यक्त्वाचाभयःशेतेत्यक्त्वासर्वंसुखीभव ॥ २२ ॥ इत्येतद्धास्तिनपुरेब्राह्मणेनोपवर्णितं ॥ शंपाकेनपुरामह्यंतस्मात्त्यागःपरोमतः ॥ २३ ॥ इतिश्रीमहाभारतेशांतिपर्वणिमो०शंपाकगीतायांषट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥ ॥छ॥ ॥छ॥ युधिष्ठिरउवाच

ईहमानःसमारंभान्यदिनासादयेद्धनं॥ धनतृष्णाभिभूतश्चकिंकुर्वन्सुखमाप्नुयात्॥ १ ॥

॥ २३ ॥ इतिशांति०मोक्षध०नै०भा०षट्सप्तत्यधिकशततमोध्यायः ॥ १७६ ॥ ॥छ॥ ॥छ॥ पूर्वंधनस्यमोक्षहेतुत्वंनिरस्तं जीवनहेतुत्वंतुप्रत्यक्षं अतोजीवनायसमारंभान्कृषिवाणिज्ययज्ञदानाद्यारंभानईहमानःकर्तुमिच्छन्योधनमलभमानस्तृष्णाभिभूतश्चसकिंकुर्यात् यत्नेनैवबाधनार्थंउतउपरमेणैववारंभादित्यर्थः आद्येवैयग्र्यात्अंत्येदेहनाशापाताच्चमोक्षसाधनंविघ्नितंभवति अतस्तयोर्मध्येकिंश्रेयइतिभावः ॥ १ ॥

सर्वत्रलाभालाभमानापमानादौसाम्यमवैषम्यंसर्वसाम्यं अनायासःधनाद्यर्थश्रमाभावः निर्वेदोवैराग्यं अविधित्साकर्मणिइच्छाभावः विधित्सेतिपाठेश्रवणादीच्छा लाभादौवैषम्येरागादिस्ततःप्रवृत्तिस्तत आयासस्ततःसत्यत्यागइत्येतानित्यक्त्वैवमुखीस्यान्नत्वत्यक्त्वा देहनिर्वाहस्त्वारब्धकर्मोपनतैरेवान्नादिभिर्भविष्यति तस्मादुपरमएवश्रेयानित्यर्थः ॥ २ ॥ पदानिपदनीयानिआश्रयणीयानि प्रशांतयेमोक्षा य एषइतिविधेयापेक्षेलिंगैकत्वे एषस्वर्गादिस्तत्साधनत्वात् ॥ ३ ॥ ४ ॥ भग्नेहःभग्नाशः व्यर्थचेष्टोवा दम्यौदमनयोग्यौगावौवत्सतरौनाभ्यांसहितंयुगंशकटादिधुरियोजितंतिर्यक्काष्ठं यस्यांतयोर्गावौयुज्ये ते ॥ ५ ॥ सुसंबद्धौयुगांतयोःसम्यग्योजितौदमनाय असंबद्धाविनिपाठेदमयित्राअसंयतौ ॥६॥स्कंधदेशंसंप्राप्तयोःसतोरितिसंबंधः उक्षिप्यतुलाभाजनद्वयवदुपरिभूमेर्नीत्वा ॥ ७॥८॥ अविहितंदैवेनानुप

भीष्मउवाच सर्वसाम्यमनायासःसत्यवाक्यंचभारत ॥ निर्वेदश्चाविधित्साचयस्यस्यात्ससुखीनरः ॥ २॥ एतान्येवपदान्याहुःपंचवृद्धाःप्रशांतये ॥ एषस्वर्गश्चधर्मश्चसुखंचानुत्तमंमतं ॥ ३ ॥ अत्राप्युदाहरंतीममितिहासंपुरातनं ॥ निर्वेदान्मंकिनागीतंतन्निबोधयुधिष्ठिर ॥४॥ ईहमानोधनंमंकिर्भग्नेहश्चपुनःपुनः ॥ केनचिद्धनशेषेणक्रीतवान्दम्यगोयुगं ॥ ५ ॥ सुसंबद्धौतुतौदम्यौदमनायाभिनिःसृतौ ॥ आसीनमुष्ट्रंमध्येनसहसैवाभ्यधावतां ॥ ६ ॥ तयोःसंप्राप्तयोरुष्ट्रः स्कंधदेशममर्षणः ॥ उत्थायोत्क्षिप्यतौदम्यौप्रससारमहाजवः ॥ ७॥ ह्रियमाणौतुतौदम्यौतेनोष्ट्रेणप्रमाथिना ॥ म्रियमाणौचसंप्रेक्ष्यमंकिस्तत्राब्रवीदिदं ॥ ८॥ नचैवाविहितंशक्यंदक्षेणापीहितुंधनं ॥ युक्तेनश्रद्धयासम्यगीहांसमनुतिष्ठता ॥ ९॥ कृतस्यपूर्वंचानर्थैर्युक्तस्याप्यनुतिष्ठतः ॥ इमंपश्यतसंगत्याममदैवमुपप्लुवं ॥ १० ॥ उद्यम्योद्यम्यमेदम्यौविषमेणैवगच्छतः ॥ उत्क्षिप्यकाकतालीयमुत्पथेनैवधावतः ॥ ११ ॥

स्थापितं ईहितुंएष्टुम् ईहितमितिपाठेआप्तुमित्यध्याहारः श्रद्धयाफलप्राप्तिनिश्चयेन ईहांचेष्टां ॥ ९ ॥ कृतस्यपूर्वंनानार्थैरितिपाठे अर्थैर्नानाकृतस्यपृथक्कृतस्य युक्तस्यअवहितचित्तस्यअनुतिष्ठतोऽर्थ प्राप्त्युपायान् संगत्यादंम्योष्ट्रसंबंधेन दैवदेवेनईश्वरेणनिर्मितं ॥ १० ॥ उपप्लवमेवाह उद्यम्येति उद्यम्योद्यम्यउष्ट्रगतिवेगादुत्प्लुत्योत्प्लुत्य विषमेणकृच्छ्रेणदम्यौगच्छतः काकतालीयंदैवकृतंसंगमं उत्क्षिप्यउ त्थाप्य धावतउष्ट्रस्येत्यपिमेणसंबंधः उन्माथेनेवजंबूकमित्यपिपाठः तालःकरतलयोःशब्दजनकःसंयोगस्तस्मिन्क्रियमाणेउत्पतन्काकोदैवात्तत्रतालाभ्यामाक्रांतोऽभूत् तदेतत्काकतालीयमित्युच्यते काकस्पर्शसमकालंतालफलस्यतालवृक्षस्यवापतनंतदित्यन्ये मेषयोर्युध्यतोःपरस्परशिरःसंघट्टउन्माथस्तेनदैवान्मध्येप्रविष्टोजंबूकोतिपीडनान्ममारतदपिकाकतालीयोत्थानमेवतथेदमित्यर्थः ॥ ११ ॥

मणीवेति वाशब्दइवार्थे हठेनैवमूढनिर्बंधेनैवपौरुषमस्तिनतुतद्दृश्यतेत्यर्थः नैवेतिपदविभागोवा ॥ १२ ॥ उपपद्येतयदिलोकदृष्टांतेनपौरुषास्तित्वंयुज्येततर्हिफलव्यभिचारात्तदपिदैवायत्तमेवोपपद्यतेन स्वातंत्र्येणेत्यर्थः ॥ १३ ॥ निर्वेदमितिपाठेक्लीबत्वमार्षं वैराग्यंगंतव्यंअनुवर्तितव्यं निराशःनिरस्ताशः अर्थश्चतत्साधनंचेतिसमाहारस्तस्मिन् ॥ १४ ॥ १५ ॥ १६ ॥ विधित्सानांधनाद्यर्थंप्रवृत्तीनां गत पूर्वःपूर्वंगतःप्राप्तोगतपूर्वः ॥ १७ ॥ हेकामुककामादिधर्मवत्हेमनः मानसेत्यपिपाठः निर्विद्यवैराग्यंप्राप्य शाम्यशमंगच्छ निकृतःवंचितः प्रवृत्तिनैष्फल्यात् ॥ १८ ॥ १९ ॥ मोक्ष्यसेत्यक्ष्यसे ॥ २० ॥

मणीवोष्ट्रस्यलंबेतेप्रियौवत्सतरौमम ॥ शुद्धंहिदैवमेवेदंहठेनैवास्तिपौरुषं ॥ १२ ॥ यदिवाप्युपपद्येतपौरुषंनामकर्हिचित् ॥ अन्विष्यमाणंतदपिदैवमेवावति ष्ठते ॥ १३ ॥ तस्मान्निर्वेदएवेहगंतव्यःसुखमिच्छता ॥ सुखंस्वपितिनिर्विण्णोनिराशश्चार्थसाधने ॥ १४ ॥ अहोसम्यक्शुकेनोक्तंसर्वतःपरिमुच्यता ॥ प्रति ष्ठतामहारण्यंजनकस्यनिवेशनात् ॥ १५ ॥ यःकामानाप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ॥ प्रापणात्सर्वकामानांपरित्यागोविशिष्यते ॥ १६ ॥ नांतंसर्ववि धित्सानांगतपूर्वोस्तिकश्चन ॥ शरीरेजीवितेचैवतृष्णामंदस्यवर्धते ॥ १७ ॥ निवर्तस्वविधित्साभ्यःशाम्यनिर्विद्यकामुक ॥ असकृच्चासिनिकृतोनचनिर्विद्यसे ततः ॥ १८ ॥ यदिनाहंविनाश्यस्तेयद्येवंरमसेमया ॥ मामांयोजयलोभेनवृथात्वंवित्तकामुक ॥ १९ ॥ संचितंसंचितंद्रव्यंनष्टंतवपुनःपुनः ॥ कदाचिन्मोक्ष्यसे मूढधनेहांधनकामुक ॥ २० ॥ अहोनुममबालिश्यंयोहंक्रीडनकस्तव ॥ किंनैवंजातुपुरुषःपरेषांप्रेष्यतामियात् ॥ २१ ॥ नपूर्वेनापरेजातुकामानामंतमाप्नु वन् ॥ त्यक्त्वासर्वसमारंभान्प्रतिबुद्धोस्मिजागृमि ॥ २२ ॥ नूनंतेहृदयंकामवज्रसारमयंदृढं ॥ यदनर्थशताविष्टंशतधानविदीर्यते ॥ २३ ॥ जानामिकामत्वां चैवयच्चकिंचित्प्रियंतव ॥ तवाहंप्रियमन्विच्छन्नात्मन्युपलभेसुखं ॥ २४ ॥ कामजानामितेमूलंसंकल्पात्किलजायसे ॥ नत्वांसंकल्पयिष्यामिसमूलोनभवि ष्यसि ॥ २५ ॥ ईहाधनस्यनसुखालब्ध्वाचिंताचभूयसी ॥ लब्धनाशेयथामृत्युर्लब्धंभवतिवानवा ॥ २६ ॥ परित्यागेनलभतेततोदुःखतरंनुकिं ॥ नचतुष्यति लब्धेनभूयएवचमार्गति ॥ २७ ॥

क्रीडनकःक्रीडामृगः जातुकदाचित् प्रेष्यतांदास्यं कामाभावेकोपिकस्यचिदपिनप्रेष्यःस्यादित्यर्थः ॥ २१ ॥ अंतंनाप्नुवन् अतोहेतोस्त्यक्त्वा ॥ २२ ॥ २३ ॥ प्रियंजायादि ॥ २४ ॥ नभविष्यसि वि नशिष्यसि ॥ २५ ॥ ईहालिप्सा चेष्टावा तदाधनस्यधनायेत्यर्थः लब्ध्वाचिंतानाशभयात् यथामृत्युस्तथादुःखकृत् श्रमेपिफलंसंदिग्धं ॥ २६ ॥ परित्यागेदेहस्यपरस्वत्वापादनेपिनलभते मार्गतिमृगयते परेभ्योयोनलभतइतिपाठे परेभ्यःसेव्यमानेभ्योपि ॥ २७ ॥

अनुतर्पुलस्तृष्णावृद्धिकृत् मद्विलापनंमन्नाशः एतत्तृष्णाख्यंध्याख्यं प्रतिबुद्धोस्मि अतोमांसंत्यज हेकामेतिशेषः ॥ २८ ॥ भूतग्रामोयानुत्स्वकारणंप्रति पंचत्वमस्त्वित्यर्थः ॥ २९ ॥ युष्मासुअनात्मसुअहंकारादिपुराजसतामसेपु सत्वंसत्वगुणं वनमेवेतिपाठे वनंब्रह्मपारिव्रज्यंवा ॥ ३० ॥ देहेतचापि मनसिहृत्पुंडरीकस्थेपश्यन् हेतौशतृप्रत्ययः एकात्मदर्शनायेत्यर्थः योगेविपये बुद्धिंकरिष्यामीतिनिश्चयं कुर्वन्श्रुतेश्रवणादौसत्वंएकाग्रचित्तंधारयन्मनश्चब्रह्मणिलवणोदकन्यायेन धारयन्विहरिष्यामीत्यग्रिमेणसंबंधः ॥ ३१ ॥ अनासक्तोनिरामयइतिरागद्वेषराहित्यमुक्तं ॥ ३२ ॥ अन्यायोगेवुद्धिमित्युक्तगते

अनुतर्पुलएवार्थःस्वादुगांगमिवोदकं॥ मद्विलापनमेतत्तुप्रतिबुद्धोऽस्मिसंत्यज॥ २८॥ यइमंमामकंदेहंभूतग्रामःसमाश्रितः॥ सयात्वितोयथाकामंवसतां वायथासुखं॥ २९॥ नयुष्मास्विहमेप्रीतिःकामलोभानुसारिषु॥ तस्मादुत्सृज्यकामान्वैसत्वमेवाश्रयाम्यहं ॥ ३० ॥ सर्वभूतान्यहंदेहेपश्यन्मनसिचात्मनः॥ योगेबुद्धिंश्रुतेसत्वंमनोब्रह्मणिधारयन् ॥ ३१ ॥ विहरिष्याम्यनासक्तःसुखीलोकान्निरामयः॥ यथामांत्वंपुनर्नैवंदुःखेपुप्रणिधास्यसि ॥ ३२ ॥ त्वयाहिमेप्रणुन्नस्यगतिरन्यानविद्यते॥ तृष्णाशोकश्रमाणांहित्वंकामप्रभवःसदा ॥ ३३ ॥ धननाशेधिकंदुःखंमन्येसर्वमहत्तरं ॥ ज्ञातयोह्यवमन्यंतेमित्राणिचधनाच्च्युतं॥ ३४॥ अवज्ञानसहस्रैस्तुदोपाःकष्टतराधने॥ धनेसुखकलायातुसापिदुःखैर्विधीयते॥ ३५॥ धनमस्येतिपुरुषंपुरोनिघ्नंतिदस्यवः ॥ क्लिश्यंतिविविधैर्दंडैर्नित्यमुद्वेजयंतिच॥ ३६॥ अर्थलोलुपतादुःखमितिबुद्धंचिरान्मया॥ यद्यदालंबसेकामंतत्तदेवानुरुध्यसे॥ ३७॥ अतत्त्वज्ञोसिबालश्चदुस्तोषोपूरणोऽनलः ॥ नैवत्वंवेत्थसुलभंनैवत्वंवेत्थदुर्लभं ॥ ३८ ॥ पातालइवदुष्पूरोमांदुःखैर्योक्तुमिच्छसि ॥ नाहमद्यसमावेष्टुंशक्यःकामपुनस्त्वया ॥ ३९ ॥ निर्वेदमहमासाद्यद्रव्यनाशाद्यदृच्छया ॥ निर्वृत्तिंपरमांप्राप्यनाद्यकामान्विचिंतये॥ ४० ॥ अतिक्लेशान्सहामीहनाहंबुध्याम्यबुद्धिमान् ॥ निकृतोधननाशेनशयेसर्वांगविज्वरः॥ ४१ ॥ परित्यजामिकामत्वांहित्वासर्वमनोगतीः॥ नत्वंमयापुनःकामवत्स्यसेनचरंस्यसे॥४२॥ क्षमिष्येक्षिपमाणानांनहिंसिष्येविहिंसितः॥ द्वेष्ययुक्तःप्रियंवक्ष्याम्यनादृत्यतदप्रियं॥ ४३॥ तृप्तःस्वस्थेंद्रियोनित्यंयथालब्धेनवर्तयन्॥ नसकामंकरिष्यामित्वामहंशत्रुमात्मनः ॥ ४४॥

रन्या ॥ ३३ ॥ ३४ ॥ अधनेइतिच्छेदःसंधिरार्षः ॥ ३५ ॥ धनमस्यास्तीति ॥ ३६ ॥ ३७ ॥ अनलोऽग्निरित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ सहामि इतःपूर्वंसोढवानस्मि ॥ ४१ ॥ मनोगतीःमनसोवृत्तीः एतेनसमाधिमनुष्ठास्येइत्युक्तंभवति तत्रैवसर्वकामाभावात् ॥ ४२ ॥ क्षिपमाणानांधिक्कुर्वतांशब्दादीन् ॥ ४३ ॥ सकामंलब्धमनोरथं हेकामेतिशेषः ॥ ४४ ॥

निर्वृतिसुखं तृप्तिपूर्णकामतां ॥ ४५ ॥ प्रतिष्ठंतंमोक्षायगंतुं ॥ ४६ ॥ ४७ ॥ ४८ ॥ रजःप्रवर्तकोगुणः तच्चकामेनानुबध्नातीतिकामानुबंधंदुःखादिकंचकामाद्युद्भवं अतःसर्वानर्थमूलंरजस्त्याज्यमित्यर्थः
॥ ४९ ॥ शाम्यामिकर्मभ्यउपरतिंगच्छामि परिनिर्वामिनिर्दुःखोभवामि सुखंस्वरूपसुखं केवलंनिर्विषयं ॥ ५० ॥ ५१ ॥ आत्मनास्थूलदेहेनसहगणनायांसप्तमःकामः तथाहि अन्नमयप्राणमयमनो
मयविज्ञानमयाश्चत्वारःकोशाःप्रवृत्तिमत्त्वाद्रजःप्रधानाः आनंदमयआवरणरूपत्वात्तमःप्रधानःपंचमः ततःशुद्धसत्वप्राधान्यात्सवीजसमाधिःसानंदाख्यःषष्ठः तस्यापिमूलमस्मीतिप्रत्ययमात्रशरी
रोमहत्तत्वाख्यःसर्वानर्थवीजभूतश्चरमःकामःसप्तमः तंहत्वा ब्रह्मैवपुरंब्रह्मपुरंप्रविष्टःस्यांयतस्तदवध्यं कुतः नास्यजरयैतज्जीर्यते नवधेनास्यहन्यतएतत्सत्यंब्रह्मपुरमितिश्रुतेः ॥ ५२ ॥ कामान्प्रथमाध्या

निर्वेदंनिर्वृतिंतृप्तिंशांतिंसत्यंदमंक्षमां ॥ सर्वभूतदयांचैवविद्धिमांसमुपागतं ॥४५॥तस्मात्कामश्चलोभश्चतृष्णाकार्पण्यमेवच ॥ त्यजंतुमांप्रतिष्ठंतंसत्वस्थो
त्यस्मिसांप्रतं ॥ ४६ ॥ प्रहायकामंलोभंचसुखंप्राप्तोस्मिसांप्रतं ॥ नाद्यलोभवशंप्राप्तोदुःखंप्राप्स्याम्यनात्मवान् ॥ ४७॥ यद्यत्त्यजतिकामानांतत्सुखस्याभि
पूर्यते ॥ कामस्यवशगोनित्यंदुःखमेवप्रपद्यते ॥ ४८ ॥ कामानुबंधंनुदतेयत्किंचित्पुरुषोरजः ॥ कामक्रोधोद्भवंदुःखमह्रीररतिरेवच ॥ ४९ ॥ एषब्रह्मप्रतिष्ठो
हंग्रीष्मेशीतमिवह्रदं ॥ शाम्यामिपरिनिर्वामिसुखंमामेतिकेवलं ॥ ५० ॥ यच्चकामसुखंलोकेयच्चदिव्यंमहत्सुखं ॥ तृष्णाक्षयसुखस्यैतेनार्हतःषोडशींकलां ॥
॥ ५१ ॥ आत्मनासप्तमंकामंहत्वाशत्रुमिवोत्तमं ॥ प्राप्यावध्यंब्रह्मपुरंराजेवस्यामहंसुखी ॥ ५२ ॥ एतांबुद्धिंसमास्थायमंकिर्निर्वेदमागतः ॥ सर्वान्कामान्प
रित्यज्यप्राप्यब्रह्ममहत्सुखं ॥ ५३ ॥ दम्यनाशकृतेमंकिरमृतत्वंकिलागमत् ॥ अच्छिनत्काममूलंसतेनप्रापमहत्सुखं ॥ ५४ ॥ इतिश्रीमहाभारतेशां
तिपर्वणिमोक्षधर्मपर्वणिमंकिगीतायांसप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७॥ ॥ ५ ॥ ॥ ५ ॥ भीष्मउवाच अत्राप्युदाह
रंतीममितिहासंपुरातनं ॥ गीतंविदेहराजेनजनकेनप्रशाम्यता ॥ १ ॥ अनंतमिवमेवित्तंयस्यमेनास्तिकिंचन ॥ मिथिलायांप्रदीप्तायांनमेदह्यतिकिंचन ॥ २ ॥
अत्रैवोदाहरंतीमंबोध्यस्यपदसंचयं ॥ निर्वेदंप्रतिविन्यस्तंतंनिबोधयुधिष्ठिर ॥ ३ ॥

मंकिवदुप
योक्तरीत्याजाग्रत्स्वप्नसंप्रज्ञातावस्थागतान्विषयान् ॥ ५३ ॥ काममूलंअविद्यां ॥ ५४ ॥ इतिशांति॰मो॰नै॰भा॰सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥ ॥ ५ ॥
रमेनैवेत्युक्तम् तेनैवयोगक्षेमसिद्धिंसदृष्टांतामाहअत्रेत्यादिना ॥ १ ॥ अनंतंदेशतः कालतोवस्तुतश्चापरिच्छिन्नं वित्तमिवनिगूढंकोशपंचकलक्षणगुहास्थं प्रत्यक्तत्त्वमेवास्यमेस्वरूपभूतं अतएवसर्वस्यम
दनन्यत्वाद्रज्जूरगवन्मयिकल्पितत्वाच्चमेममनकिंचन अतएवाहमिथिलायामिति नह्यध्यस्तदोषैरधिष्ठानंस्पृश्यते मरीचिनद्यापिमरुभूमेरार्द्रत्वापत्तेरितिभावः ॥ २ ॥ पदसंचयंश्लोकं वैराग्यार्थमुपन्यस्तं ॥ ३ ॥

॥ ४ ॥ ५ ॥ तस्यउपदेशस्यलक्षणंज्ञापकं तन्ज्ञाप्यं ॥ ६ ॥ सारंगोभ्रमरस्तस्यअन्वेषणंअनुगमनं इषगतौदिवादिः ॥ ७ ॥ यस्माद्यस्माद्गुरोर्यद्यदुपात्तंतत्तदाहभीष्मः आशेति राजन्हेयुधिष्ठिर ॥ ८ ॥
॥ ९ ॥ पिंगलावत्कुररवच्चाशांगृहधनरूपामामिषंचत्यक्त्वाकथंजीवेनेत्याशंक्यान्यथासिद्धिमाहगृहेतिद्वाभ्यां ॥ १० ॥ ११ ॥ एवमारंभांतरवर्जितेनब्राह्मणैकाग्र्यंचित्तस्यसंपादनीयमित्याह इष्विति ॥
॥ १२ ॥ ऐकाग्र्यमेकाकिनैवैवसितव्यमित्याह बहूनामिति काचित्कुमारीपित्रादिपरवशागृहागतानतिथीन्स्वच्छंदंभोजयितुमिच्छंतीव्रीहीनवहंतुंप्रचक्रमेतस्याःप्रकोष्ठस्थाःशंखाश्चुकुशुः सापरेषांसूचना
माभूदितिशंखान्भंक्त्वाएकैकमवशेषितवतीतिश्रीमद्भागवतेदृष्टांतोऽयंव्याख्यातः ॥ १३ ॥ इतिशां०मो० नै०भा० अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥ ॥ ५ ॥ ॥ ५ ॥

बोध्यंशांतमृषिंराजानाहुषःपर्यपृच्छत ॥ निर्वेदाच्छांतिमापन्नंशास्त्रप्रज्ञानतर्पितं ॥ ४ ॥ उपदेशंमहाप्राज्ञशमस्योपदिशस्वमे ॥ कांबुद्धिंसमनुध्यायशांतश्च
रसिनिर्वृतः ॥ ५ ॥ बोध्यउवाच उपदेशेनवर्तामिनानुशास्मीहकंचन ॥ लक्षणंतस्यवक्ष्येहंतत्स्वयंपरिमृश्यतां ॥ ६ ॥ पिंगलाकुररःसर्पःसारंगान्वेषणंव
ने ॥ इषुकारःकुमारीचषडेतेगुरवोमम ॥ ७ ॥ भीष्मउवाच आशाबलवतीराजन्नैराश्यंपरमंसुखं ॥ आशांनिराशांकृत्वातुसुखंस्वपितिपिंगला ॥ ८ ॥
सामिषंकुररंदृष्ट्वावध्यमानंनिरामिषैः ॥ आमिषस्यपरित्यागात्कुररःसुखमेधते ॥ ९ ॥ गृहारंभोहिदुःखायनसुखायकदाचन ॥ सर्पःपरकृतंवेश्मप्रविश्य
सुखमेधते ॥ १० ॥ सुखंजीवंतिमुनयोभैक्ष्यवृत्तिंसमाश्रिताः ॥ अद्रोहेणैवभूतानांसारंगाइवपक्षिणः ॥ ११ ॥ इषुकारोनरःकश्चिदिषावासक्तमानसः ॥
समीपेनापिगच्छंतंराजानंनावबुद्धवान् ॥ १२ ॥ बहूनांकलहोनित्यंद्वयोःसंकथनंध्रुवं ॥ एकाकीविचरिष्यामिकुमारीशंखकोयथा ॥ १३ ॥ इतिश्री
महाभारतेशां०मोक्ष०बोध्यगीतायांअष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥ ॥ ५ ॥ युधिष्ठिरउवाच केनवृत्तेनवृत्तज्ञवीतशोकश्च
रेन्महीं ॥ किंचकुर्वन्नरोलोकेप्राप्नोतिगतिमुत्तमां ॥ १ ॥ भीष्मउवाच अत्राप्युदाहरंतीममितिहासंपुरातनं ॥ प्रह्लादस्यचसंवादंमुनेराजगरस्यच ॥
॥ २ ॥ चरंतंब्राह्मणंकंचित्कल्पचित्तमनामयं ॥ पप्रच्छराजाप्रह्लादोबुद्धिमान्बुद्धिसंमतं ॥ ३ ॥

केनेत्याक्षेपेकेनवृत्तेनवीतशोकोभूत्वामहींचरेत् नतादृशंवृत्तमस्तीत्यर्थः यतः सर्पसारंगवृत्त्यागृहाहारसंपादनेपिप्रतिपक्षबाहुल्यंदृश्यते द्विषंतिहिभिक्षुकाभिक्षुकांतरंस्वाध्यासितस्थानागतमतएकाकित्वैका
ग्र्ययोश्चासंभवः अन्नचिंतयाधनाशावियोगस्यापिदुष्करत्वादितिभावः अतःकिंचतादृशमुपायांतरंहिंसाशून्यमुत्तमगतिप्रदमस्तीतिप्रश्नार्थः ॥ १ ॥ उत्तरमाह अत्रेति आजगरस्यअजगरवृत्त्याजीवतः
॥ २ ॥ कल्पचित्तंदृढचित्तं अनामयंरागद्वेषाननुविद्धं ॥ ३ ॥

स्वस्थःविषयैरनाकृष्टः शुद्धोदंभादिहीनः मृदुर्दयावान् दांतोजितेंद्रियः निर्विधित्सोनिरारंभः अनसूयकःसर्वत्रादोषदर्शी सुवाक्सत्यवाक् प्रगल्भःप्रतिभानवान् मेधावीऊहापोहकुशलः प्राज्ञःज्ञाततत्त्वः ॥ ४ ॥ मन्यसेइष्टत्वेनानिष्टत्वेनवा अवमन्यसेइतिपाठेवीतदर्पोसीत्यर्थः ॥ ५ ॥ स्रोतसाकामादिवेगेन विमनाःनिर्मनस्कः स्थाणुरिवकूटस्थोनिर्व्यापारः अविमनाइतिपाठेतुअव्याकुलचित्तः ॥ ६ ॥ कौटस्थ्यमेवाह नेति इंद्रियार्थान्गंधरसादीननादृत्यचरसिक्षुन्निर्वाहमात्रार्थीअश्नासि साक्षिवन्मुक्तःकर्तृत्वादिना ॥ ७ ॥ प्रज्ञातत्त्वदर्शनं श्रुतंतन्मूलभूतंशास्त्रंवृत्तिस्तदर्थानुष्ठानं श्रेयोममेतिशेषः ॥८॥ अनुयुक्तःपृष्टः लोकस्यधर्मोजन्मजरादिस्तस्यविधानंकारणमविद्याकामकर्मादितदभिज्ञःलोकधर्मविधानवित् ॥ ९॥ भूतानामुत्पत्त्यादिकंअनिमित्ततःकारणहीनादेकादद्वितीयादितिपश्यआलोचयश्रुतियुक्तिभ्यां श्रुतिस्तावत् सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयंतदैक्षतबहुःस्यांप्रजायेयेति सजातीयविजातीयस्वगतभेदशून्यादेकरसाद्वस्तुनोजगदुत्पत्तिमाह युक्तिरपिशून्याज्जगदुत्पत्त्ययोगात् अचेतनानांचप्रधानपर

प्रह्लादउवाच स्वस्थःशक्तोमृदुर्दांतोनिर्विधित्सोऽनसूयकः॥ सुवाक्प्रगल्भोमेधावीप्राज्ञश्चरसिबालवत्॥ ४ ॥ नैवप्रार्थयसेलाभंनालाभेष्वनुशोचसि॥ नित्यतृप्तइवब्रह्मन्नकिंचिदिवमन्यसे॥५॥ स्रोतसाह्रियमाणासुप्रजासुविमनाइव॥धर्मकामार्थकार्येषुकूटस्थइवलक्ष्यसे॥ ६ ॥ नानुतिष्ठसिधर्मार्थौनकामे चापिवर्तसे॥इंद्रियार्थाननादृत्यमुक्तश्चरसिसाक्षिवत् ॥ ७ ॥ कानुप्रज्ञाश्रुतंवाकिंवृत्तिर्वाकानुतेमुने ॥ क्षिप्रमाचक्ष्वमेब्रह्मन्श्रेयोयदिहमन्यसे ॥ ८ ॥ भीष्मउवाच अनुयुक्तःसमेधावीलोकधर्मविधानवित्॥उवाचश्लक्ष्णयावाचाप्रह्लादमनपार्थया॥ ९॥ पश्यप्रह्लादभूतानामुत्पत्तिमनिमित्ततः॥ ह्रासंवृद्धिंविनाशंचनप्रहृष्येनचव्यथे॥ १० ॥ स्वभावादेवसंदृश्यावर्तमानाःप्रवृत्तयः॥ स्वभावनिरताःसर्वाःपरितुष्येन्नकेनचित्॥ ११ ॥

माण्वादीनामधिष्ठातारमंतरेणसंघातकर्तृत्वायोगात् विकरणस्येश्वरस्याधिष्ठातृत्वायोगात्संसारस्यस्वाभाविकत्वेमुक्त्ययोगात्स्वममायेंद्रजालवदविद्याकल्पितत्वमवश्यंवाच्यं अविद्यानाशस्यचसर्वतंत्रसिद्धत्वात्अविद्यामिथ्या अनादिभावत्वेसतिअनित्यत्वाद्व्यतिरेकेणाकाशवदित्यविद्यामिथ्यात्वसिद्धेरेकाद्वितीयादेवजगदुत्पत्तिसाधयति ततश्चयन्मदन्यन्नास्तिकस्मान्नुबिभेमीतिश्रुतेरात्मज्ञस्यममद्वितीयाभावान्नहर्षव्यथेभवतः ॥ १० ॥ एवमेकाद्वितीयाद्वस्तुनउत्पत्तिमुक्त्वातत्रैवस्थितिलयावप्याह स्वेति स्वभावात्स्वस्यभावःस्वभावःस्वरूपसत्तातत एववर्तमानाःप्रवृत्तयोऽपिसंदृश्याःसम्यग्द्रष्टव्याः स्वभावेएवनिरताःसर्वाःप्रजास्तासामेतासांस्वभावादन्यत्परायणंनास्तीत्यर्थः तस्मादेवंजानन्केनचिद्ब्रह्मलोकैश्वर्यलाभेनापिनतुष्येत्तुच्छमेवैतद्दृश्यमितिविजानीयादित्यर्थः ॥ ११ ॥

एवंतत्त्वदृष्ट्यास्वास्थ्यमुपपाद्यबाह्यदृष्ट्यापिलोकस्यानित्यत्वात्तदुपपादयति पश्येति तस्मादहंमनोनकचिद्विषयेविदधेधारयामि तद्विनाशेशोकोत्पत्तिंजानन् यद्वा अश्रौतयोरारंभसंघातवादयोरपिजगदनित्यत्वमस्तीतिस्वास्थ्यमेवोचितमित्याह पश्येति ॥ १२॥ एवमाद्यन्यश्रौतानिमतानिदूषयति अंतवंतीति भूतानिपरमतेनित्यसिद्धानिपरमाणुप्रधानादीनीतिपक्षनिर्देशः जरायुजादिशरीराणिदृष्टांतोवा अंतवत्त्वंसाध्यं गुणयुक्तत्वंहेतुः यत्संहतंघटादितदनित्यंपरमाण्वादयश्चगुणगुणीभावेनप्रधानंचगुणत्रयात्मत्वेनसंहताइतिध्रुवमनित्याः तस्मात्पूर्वोक्तमुत्पत्तिनिधनहेतुभूतंवस्तुजानतःकिंकार्यंकर्तव्यमवशिष्यतेनकिमपीत्यर्थः तथाचश्रुतिः एतद्धस्मवैतद्विद्वांसःपूर्वेमहाशालामहाश्रोत्रियाअग्निहोत्रंनजुहवांचक्रिरइति ॥ १३ ॥ पामरदृष्ट्यापिजगतोविनाशित्वमाह जलजानामित्यादिपंचभिः ॥ १४ ॥ पार्थिवानांपृथिवीस्थानां ॥ १५ ॥ १६ ॥ १७॥ सर्वसामान्यगःयथाघटत्वादिसामान्यंपटादिभ्योव्यावृत्तं पृथिवीत्वसामान्यंतूभयसमं तदुपादानत्वात् एवंसर्वस्यसत्सदितिसदभेदेनप्रतीयमानस्योपादानंसत्तासामान्यंसर्वसामान्यंनतुतार्किकाभिमतं तस्यसत्तासमवायादिभ्योव्यावृत्तत्वेनसर्वसामान्यत्वाभावात् तच्चशुद्धंब्रह्मतद्गतःसर्वसामान्यगः सर्वसामान्यतोविद्वानित्यपपाठः ॥ १८ ॥ आजगरींवृत्तिंप्रपंचयतिसुमहांतमित्यादिना सुमहांतंरसाधिक्यात् ॥ १९ ॥ आशयंतिभोजयंति अल्पंरसाल्पत्वात् ॥ २० ॥ कणंअतिसूक्ष्मंधान्यांशं पिण्याकंतिलखलिं ॥ २१ ॥ २२ ॥ क्षौमाणिक्षुमाअतसीतत्सूत्रमयानि ॥ २३ ॥ धर्म्यंधर्मादनपेतं यथेष्टाचरणेतत्त्वविदामपिश्वसूकरादितुल्यतापत्तेः ॥ २४ ॥

पश्यप्रह्लादसंयोगान्विप्रयोगपरायणान् ॥ संचयांश्चविनाशांतान्नक्कचिद्विदधेमनः ॥ १२ ॥ अंतवंतिचभूतानिगुणयुक्तानिपश्यतः ॥ उत्पत्तिनिधनज्ञस्यकिंकार्यमवशिष्यते ॥ १३ ॥ जलजानामपित्वंतंपर्यायेणोपलक्षये ॥ महतामपिकायानांसूक्ष्माणांचमहोदधौ ॥ १४ ॥ जंगमस्थावराणांचभूतानामसुराधिप ॥ पार्थिवानामपिव्यक्तंमृत्युंपश्यामिसर्वशः ॥ १५ ॥ अंतरिक्षचराणांचदानवोत्तमपक्षिणां ॥ उत्तिष्ठतेयथाकालंमृत्युर्बलवतामपि ॥ १६ ॥ दिविसंचरमाणानिह्रस्वानिचमहांतिच ॥ ज्योतींष्यपियथाकालंपतमानानिलक्षये ॥ १७ ॥ इतिभूतानिसंपश्यन्ननुषक्तानिमृत्युना ॥ सर्वसामान्यगोविद्वान्कृतकृत्यःसुखंस्वपे ॥ १८ ॥ सुमहांतमपिग्रासंग्रसेलब्धंयदृच्छया ॥ शयेपुनरभुंजानोदिवसानिबहून्यपि ॥ १९ ॥ आशयंत्यपिमामन्नंपुनर्बहुगुणंबहु ॥ पुनरल्पंपुनस्तोकंपुनर्नैवोपपद्यते ॥ २० ॥ कणंकदाचित्खादामिपिण्याकमपिचग्रसे ॥ भक्षयेशालिमांसानिभक्षांश्चोच्चावचान्पुनः ॥ २१ ॥ शयेकदाचित्पर्यंकेभूमावपिपुनःशये ॥ प्रासादेचापिमेशय्याकदाचिदुपपद्यते ॥ २२ ॥ धारयामिचचीराणिशाणक्षौमाजिनानिच ॥ महार्हाणिचवासांसिधारयाम्यहमेकदा ॥ २३ ॥ नसन्निपतितंधर्म्यमुपभोगंयदृच्छया ॥ प्रत्याचक्षेनचाप्येनमनुरुध्येसुदुर्लभं ॥ २४ ॥

अचलंदृढं अनिधनंमृत्युविरोधि शुचि आर्षोविभक्त्यलुक् विदुषांमतेब्रह्मणिप्रविष्टंतत्प्रापकमित्यर्थः अनभिमतत्वादेवासेवितंमूढैः आजगरंअजगरोह्ययत्नेनैवजीवतितस्येदं ॥ २५ ॥ कषायःक्रोधाद्यावे शेनास्तिमितचित्ततारागद्वेषादिर्वा ॥ २६ ॥ अनियतंअकृतंफलादियत्र विधिरदृष्टंतस्यपरिणामःपरिपाकस्तेनैवदेशकालव्यवस्थयाप्रापितं कदर्यैर्विषयलुब्धैः ॥ २७ ॥ धनप्राप्तौकर्मैवकारणंनपौरुषमिति धियानिशम्यआलोच्य ॥ २८ ॥ अर्थहेतोःअनार्यंनीचं अर्यंस्वामिनंआश्रयतियःकृपणोदीनजनस्तमनुदृश्यउपशमरुचिः आत्मवान्जितचित्तः ॥ २९ ॥ विधिनियतंदैवाधीनं ॥ ३० ॥ धृतिर्धैर्यं मति रालोचनं बुद्धिर्निश्चयः उपगतंसमीपागतंफलंप्रियंयेषांतान् भोगिनःसर्पान्अजगरान् निशम्यदृष्ट्वा फलभोगिनइतिशाकपार्थिवादिवन्मध्यमपदलोपः ॥ ३१ ॥ प्रकृत्यादमादियुक्तःसिद्धत्वात् नतुसा

अचलमनिधनंशिवंविशोकंशुचिमतुलंविदुषांमतेप्रविष्टं॥ अनभिमतमसेवितंविमूढैर्व्रतमिदमाजगरंशुचिश्चरामि॥ २५ ॥ अचलितमतिरच्युतःस्वधर्मा त्परिमितसंसरणःपरावरज्ञः॥ विगतभयकषायलोभमोहोव्रतमिदमा० ॥ २६॥ अनियतफलभक्ष्यभोज्यपेयंविधिपरिणामविभक्तदेशकालं ॥ हृदयसुख मसेवितंकदर्यैर्व्रतमिदमाजगरंशुचिश्चरामि ॥ २७॥ इदमिदमितितृष्णयाभिभूतंजनमनवाप्तधनंविषीदमानं ॥ निपुणमनुनिशम्यतत्त्वबुद्ध्याव्रतमिद० ॥ ॥ २८॥ बहुविधमनुदृश्यचार्थहेतोःकृपणमिहार्यमनार्यमाश्रयंतं॥ उपशमरुचिरात्मवान्प्रशांतोव्रतमिदमाजगरं० ॥ २९ ॥ सुखमसुखमलाभमर्थलाभं रतिमरतिंमरणंचजीवितंच ॥ विधिनियतमवेक्ष्यतत्त्वतोहंव्रतमिद० ॥ ३०॥ अपगतभयरागमोहदर्पोधृतिमतिबुद्धिसमन्वितःप्रशांतः ॥ उपगतफलभोगि नोनिशम्यव्रतमिदमाज० ॥३१॥ अनियतशयनासनःप्रकृत्यादमनियमव्रतसत्यशौचयुक्तः॥ अपगतफलसंचयःप्रहृष्टोव्रतमिद० ॥३२॥ अपगतमसुखा र्थमीहनार्थैरुपगतबुद्धिरवेक्ष्यचात्मसंस्थं ॥ तृषितमनियतंमनोनियंतुंव्रतमिद० ॥ ३३ ॥ हृदयमनतुरुध्यवाङ्मनोवाप्रियसुखदुर्लभतामनित्यतांच ॥ तदुभयमुपलक्षयन्निवाहंव्रतमिद० ॥ ३४॥

धकवद्धठेन अपगतंफलसंचयस्त्यक्तयोगफलसमूहः ॥ ३२ ॥ ईहनार्थैःइच्छाविषयैरूपादिभिः एषणाविषयैर्वापुत्रवित्तादिभिर्हेतुभिः असुखार्थंपरिणामेदुःखार्थंअपगतंआत्मनःपराङ्मुखंतृषितमनियतं चमनोवेक्ष्य उपगतबुद्धिर्लब्धालोकःआत्मसंस्थंआत्मनिसंस्थासमाप्तिर्यस्यतत्तथानियंतुंव्रतंचरामि अभिहतमसुखैरिहार्थनाशैरित्याद्यःपाठः ॥ ३३ ॥ हृदयंतात्स्थ्याद्बुद्धिर्मनश्च ताभ्यांतद्धर्माःकर्तृत्वभो क्तृत्वकामसंकल्पादयोलक्ष्यंते तानननुरुध्यउपेक्ष्य पाठांतरे नअनुरुध्येतिसंबंधात्सएवार्थः तत्तत्रबुद्धौसुदुर्लभतांसुखानित्यतांचोभयंउपलक्षयन्नितियोजना ॥ ३४ ॥

त्वंआढ्योभूत्वापिब्राह्मणत्वान्नराजाभवेः नापिदैवतंयदिकदाचिद्भवेस्तथापिनतुष्येरितियोज्यं परिच्छिद्यैवकामान्वैइतिपाठेराजानैवभवेरितिशेषः ॥ २५ ॥ २६ ॥ अस्तीति शोकादिकंत्वय्येवास्तिअतः स्वगतेनैवहर्षेणशोकंमार्जयितुंशक्तस्यतेवृथैवेयंपरिदेवनेत्यर्थः ॥ २७॥ हर्षोद्दीपनप्रकारमाह परीति कामादीनांमूलंबुद्धींद्रियग्रामं शकुंनानिवशरीरपंजरेपरिछिद्यनिरुध्यस्थितस्यभयंनास्तीत्युत्तरेणसंबंधः ॥ २८ ॥ भयाभावोपिकिंद्वैतादर्शनाद्वाद्वैताभावाद्वेत्याशंक्यनत्वद्वैताभावेहेतुंदृष्टांतमुखेनाह नेति यथाद्वितीयस्यशिरसस्तृतीयस्यपाणर्वास्वरूपेणाभावाज्ञानुकदाचिच्छेदनंतज्जंदुःखंनास्तितथायद्वैतंकालत्रयेपिनास्तिततोभयमपिनास्तीत्यर्थः तथाच अतोन्यदार्तंनेहनानास्तिकिंचनयन्मदन्यन्नास्तिकस्मान्नुबिभेमीत्यादिद्वैताभावप्रतिपादिकाश्रुतिरबाधिताभवति दुःखप्रतीतिस्तुस्वप्नवदप्युपपद्यतइतिनकश्चिद्दोषः ॥ २९ ॥ ननुप्रत्यक्षेणशीतोष्णादिभयंस्वप्नवदबाधितंदृश्यतेतत्कथंभयंनास्तीतिलोकदृष्ट्याप्याशंक्याह नेति स्पर्शसुखाभिज्ञस्यैवानुभूतेविषयेकामोजायते बुध्यादिनिरोधेनरसज्ञानाभावान्नकचिदपिविषयेकामोजायतेऽतोबुध्यादिकृतंशीतोष्णाद्यपितन्निरोधेननास्त्येवेत्यर्थः ॥ ३० ॥ अरसज्ञस्यकामोनजायतइत्यत्रदृष्टांतमाह नेति वारुण्यामद्यस्य लट्टाख्यपक्षिमांसस्यचकर्मणिषष्ठ्यौ त्वंनस्मरसि ब्राह्मणत्वेननवतद्रसग्रहाभावात् भक्ष्योरस्योविषयस्ताभ्यामन्योनविद्यते तथापित्वंतद्वयंनस्मरसि ॥ ३१ ॥ कस्यचिद्राजादेः येषांयानिअभुक्तपूर्वाणि तेत्वया ॥ ३२ ॥ उपसंहरति अप्राशनमिति प्राशनादिवर्जननियमएवपुरुषस्यश्रेयः ॥ ३३ ॥ दैवाधीनत्वाच्चसुखादेर्नत्वयाशोकःकार्यइत्याह पाणिमंतइत्यादिना दासत्वंवधबंधादिकं हीनवृत्तिः सत्यपिसामर्थ्येतदत्यागंचांडालादिदेहंनिद्यतरमनिष्टमपिदैवबलात्कारादेवप्राणिनामपरिहार्यमितिश्लोकपंचकस्यभावः ॥ ३४ ॥ ३५ ॥ ३६ ॥

भवेस्त्वंयद्यपित्वाढ्योनराजानचदैवतं॥ दैवत्वंप्राप्यचेंद्रत्वंनैवतुष्येस्तथासति॥ २५॥ नतृप्तिःप्रियलाभेस्तितृष्णानाद्भिःप्रशाम्यति ॥ संप्रज्वलतिसाभूयःसमिद्भिरिवपावकः॥ २६॥ अस्त्येवत्वयिशोकोपिहर्षश्चापितथात्वयि॥ सुखदुःखेतथाचोभेतत्रकापरिदेवना ॥ २७॥ परिच्छिद्यैवकामानांसर्वेषांचैवकर्मणां॥ मूलंबुद्धींद्रियग्रामंशकुंतानिवपंजरे ॥ २८॥ नद्वितीयस्यशिरसश्छेदनंविद्यतेक्वचित्॥ नचपाणेस्तृतीयस्ययन्नास्तिनततोभयं ॥ २९ ॥ नखल्वप्यरसज्ञस्यकामःक्वचनजायते॥ संस्पर्शाद्दर्शनाद्वापिश्रवणाद्वापिजायते॥ ३०॥ नत्वंस्मरसिवारुण्यालट्टाकानांचपक्षिणां ॥ ताभ्यांचाभ्यधिकोभक्ष्योनकश्चिद्विद्यतेक्वचित्॥ ३१ ॥ यानिचान्यानिभूतेषुभक्ष्यजातानिकस्यचित्॥ येषामभुक्तपूर्वाणितेषामस्मृतिरेवते ॥ ३२ ॥ अप्राशनमसंस्पर्शमसंदर्शनमेवच ॥ पुरुषस्यैषनियमोमन्येश्रेयोनसंशयः॥ ३३॥ पाणिमंतोबलवंतोधनवंतोनसंशयः॥ मनुष्यामानुषैरेवदासत्वमुपपादिताः॥ ३४॥ वधबंधपरिक्लेशैःक्लिश्यंतेच पुनःपुनः॥ तेखल्वपिरमंतेचमोदंतेचहसंतिच॥ ३५॥ अपरेबाहुबलिनःकृतविद्यामनस्विनः॥ जुगुप्सितांचकृपणांपापवृत्तिमुपासते॥ ३६॥

॥ ३७ ॥ ३८ ॥ तवत्वितरापेक्षयादैवमनुकूलमस्तीत्याह दृष्ट्वेति कुणीन्हस्तविकलान् पक्षहतान्अर्धांगवातादिनानष्टान् आमयाविनोरोगाक्रांतान् अधिकदुःखान्अन्यान्दृष्ट्वास्वयंआत्मानंसुखिनं मन्येतेत्यर्थः ॥ ३९ ॥ ४० ॥ प्रवादेनकलंकेन अपहारिणाजातिभ्रंशकरेण ॥ ४१ ॥ मुख्यंविवेकंचित्तशुद्धिंवा ॥ ४२ ॥ ४३ ॥ ४४ ॥ विहारायययथोचितेनयज्ञादिनाविहर्तुंसुनक्षत्रेपुष्यादौ सार्धश्लोकः ॥ ४५ ॥ आसुरेषुमूलाश्लेषादिषु ॥ ४६ ॥ पंडितकःकुत्सितःपंडितः यतोहैतुकः अनारब्धद्रव्यत्वादित्यादिभिर्हेतुभिराकाशादेरपिनित्यत्वसाधनपरः वेदनिंदकःअतोन्यदानेमितितदनित्यत्वप्रतिपादकस्यवेदस्याप्रामाण्यकर्ता ईक्षाप्रत्यक्षं तमनुप्रवृत्ताईक्षाअन्वीक्षाधूमादिदर्शनेनवन्ह्याद्यनुमानंतत्प्रधानांआन्वीक्षिकींतर्कविद्यांकणभक्षाक्षचरणादिप्रणीतंशास्त्रं निरर्थिकांपुरुषार्थचतुष्टयशून्यांश्रुत्येकगम्य

उत्सहंतेचतेवृत्तिमन्यामप्युपसेवितुं ॥ स्वकर्मणातुनियतंभवितव्यंतुतत्तथा ॥ ३७ ॥ नपुल्कसोनचांडालआत्मानंत्यक्तुमिच्छति ॥ तयातुष्टःस्वयायोन्यामायांपश्यस्वयादृशीं ॥ ३८ ॥ दृष्ट्वाकुणीन्पक्षहतान्मनुष्यानामयाविनः ॥ सुसंपूर्णःस्वयायोन्यालब्धलाभोसिकाश्यप ॥ ३९ ॥ यदिब्राह्मणदेहस्तेनिरातंकोनिरामयः ॥ अंगानिचसमग्राणिनचलोकेषुधिकृतः ॥ ४० ॥ नकेनचित्प्रवादेनसत्येनैवापहारिणा ॥ धर्मायोत्तिष्ठविप्रर्षेनात्मानंत्यक्तुमर्हसि ॥ ४१ ॥ यदिब्रह्मन्शृणोष्येतच्छ्रद्दधासिचमेवचः ॥ वेदोक्तस्यैवधर्मस्यफलंमुख्यमवाप्स्यसि ॥ ४२ ॥ स्वाध्यायमग्निसंस्कारमप्रमत्तोनुपालय ॥ सत्यंदमंचदानंचस्पर्धिष्ठामाचकेनचित् ॥ ४३ ॥ येकेचनस्वध्ययनाःप्रामायजनयाजनं ॥ कथंतेचानुशोचेयुर्ध्यायेयुर्वाप्यशोभनं ॥ ४४ ॥ इच्छंतस्तेविहारायसुखंमहदवाप्नुयुः ॥ उतजाताःसुनक्षत्रेसुतिथौसुमुहूर्तजाः ॥ यज्ञदानप्रजेहायांयतंतेशक्तिपूर्वकं ॥ ४५ ॥ नक्षत्रेष्वासुरेष्वन्येदुस्तिथौदुर्मुहूर्तजाः ॥ संपतंत्यासुरींयोनिंयज्ञप्रसववर्जिताः ॥ ४६ ॥ अहमासंपंडितकोहैतुकोवेदनिंदकः ॥ आन्वीक्षिकींतर्कविद्यामनुरक्तोनिरर्थिकां ॥ ४७ ॥ हेतुवादान्प्रवदितावक्तासंसत्सुहेतुमन् ॥ आक्रोष्टाचाभिवक्ताचब्रह्मवाक्येषुचद्विजान् ॥ ४८ ॥ नास्तिकःसर्वशंकीचमूर्खःपंडितमानिकः ॥ तस्येयंफलनिर्वृत्तिःसृगालत्वंममद्विज ॥ ४९ ॥ अपिजातुतथातस्मादहोरात्रशतैरपि ॥ यदहंमानुषींयोनिंसृगालःप्राप्नुयांपुनः ॥ ५० ॥

स्यवस्तुतत्त्वस्यनिर्णयानुपयोगिनीं ॥ ४७ ॥ प्रवदिताप्रकर्षेणवदिताश्रुतेरनुमानाविरोधेनैवप्रामाण्यंनस्यतइतिवदिता ननुनास्तिकान्प्रत्येतद्वक्तुंयुक्तंयुक्तिबलेनैववेदाप्रामाण्यवादिनांतेषांनिरसनीयत्वादितिनायंदोषइत्यनआह संसत्सुसमीचीनेषुसाधुष्वपिहेतुमदेववक्तानश्रुतिमत् आक्रोष्टापरुषवाक् अभिवक्ताअभिक्रम्यवक्ता ब्रह्मवाक्येषुवेदवाक्येषुविचार्यमाणेषु ॥ ४८ ॥ नास्तिकःवेदप्रामाण्यनिंदकः सर्वशंकीस्वर्गादृष्टादिसद्भावेपिशंकावान् स्वभाववादेनचाभितआकृष्यमाणोऽनवस्थितइत्यर्थः कुतर्कमनादृत्यवेदमार्गेएवत्वयास्थातव्यमितिभावः ॥ ४९ ॥ ममतुएनदत्यंतंप्रार्थ्यमित्याह अपीति तस्मान्हीनयोनिदात्पापान्मुक्तइतिशेषः ॥ ५० ॥

॥ ५१ ॥ ५२ ॥ समवैक्षतेति दिव्यज्ञानवतांकाश्यपादीनामपिदेहाभिमानावेशादीदृशीबुद्धिर्भवतिकिमुतभाक्तानामितिदेहावेशोवर्ज्यइतिभावः यथोक्तं देहावेशात्प्रमाद्यतीति ॥ ५३ ॥ हरिवाहनमिंद्रम्
॥ ५४ ॥ इतिशां०मो०नै०भा० अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ ५ ॥ ॥ ५ ॥ ॥ ५ ॥ आजगरव्रतलाभेप्रज्ञैवदेहावेशनिवृत्तिद्वारेणहेतुरित्युक्तं तत्रप्रज्ञाबुद्धेःपरिणा
मविशेषः सचक्षीरदधिवत्स्वभावादेवकालक्रमेणभविष्यतीतिदत्तेष्टादेर्वैयर्थ्यंमन्वानःशंकते यदीति शरणागतसंत्राणंभूतानामप्यहिंसनं बहिर्वेदिचयद्दानंदत्तमित्यभिधीयते अग्निहोत्रंतपःशौचंवेदानांचानुशास
नं आतिथ्यंवैश्वदेवंचइष्टमित्यभिधीयते दत्तेष्टेगृहस्थस्यधर्मः तपोवानप्रस्थस्य गुरुशुश्रूषाब्रह्मचारिणः यदिदत्तादिकंशुभादृष्टोत्पादनद्वाराकालांतरीयप्रज्ञाहेतुर्भवतिनतर्हिमेमह्यमनुष्ठेयमेतदितिब्रूहि नोचेत्स्व
भावएवशरणंममेत्यर्थः ॥ १ ॥ स्वभाववादेसर्वेषांभौतिकानामुत्पत्त्यादौएकरूपैवसामग्री तथाचह्रस्वदीर्घसाध्वसाधुसुखदुःखादिवैचित्र्यंजगतिदृश्यमानंनोपपद्यतेऽतस्तत्रावश्यंकर्मजन्यमदृष्टंकारणमभ्युपे

संतुष्टश्चाप्रमत्तश्चयज्ञदानतपोरतिः ॥ ज्ञेयज्ञानाभवेयंवैवर्ज्यंवर्जयितातथा ॥ ५१ ॥ ततःसमुनिरुत्थायकाश्यपस्तमुवाचह ॥ अहोबतासिकुशलोबुद्धिमांश्चे
तिविस्मितः ॥ ५२ ॥ समवैक्षततंविप्रोज्ञानदीर्घेणचक्षुषा ॥ ददर्शचैनंदेवानांदेवमिंद्रंशचीपतिं ॥ ५३ ॥ ततःसंपूजयामासकाश्यपोहरिवाहनं ॥ अनुज्ञा
तस्तुतेनाथप्रविवेशस्वमालयं ॥ ५४ ॥ इतिश्रीमहाभारतेशां०मोक्षधर्मपर्वणिसृगालकाश्यपसंवादेअशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ ५ ॥
युधिष्ठिरउवाच यद्यस्तिदत्तमिष्टंवातपस्तप्तंतथैवच ॥ गुरूणांवापिशुश्रूषातन्मेब्रूहिपितामह ॥ १ ॥ भीष्मउवाच आत्मनानर्थयुक्तेनपापेनिविश
तेमनः ॥ स्वकर्मकलुषंकृत्वाकृच्छ्रेलोकेविधीयते ॥ २ ॥ दुर्भिक्षादेवदुर्भिक्षंक्लेशात्क्लेशंभयाद्भयं ॥ मृतेभ्यःप्रमृतंयांतिदरिद्राःपापकारिणः ॥ ३ ॥ उत्सवादुत्स
वंयांतिस्वर्गात्स्वर्गंसुखात्सुखं ॥ श्रद्दधानाश्चदांताश्चधनाढ्याःशुभकारिणः ॥ ४ ॥ व्यालकुंजरदुर्गेषुसर्पचोरभयेषुच ॥ हस्तावापेनगच्छंतिनास्तिकाःकिमतः
परं ॥ ५ ॥ प्रियदेवातिथेयाश्चवदान्याःप्रियसाधवः ॥ क्षेम्यमात्मवतांमार्गमास्थिताहस्तदक्षिणं ॥ ६ ॥

यमितिमत्वापुण्योवैपुण्येनकर्मणाभवतिपापःपापेन बुद्धिःकर्मानुसारिणीतिश्रुतिस्मृतिसिद्धंकर्मणःसदसत्प्रज्ञाहेतुत्वमाह आत्मनेति आत्मनाबुद्ध्या अनर्थःकामक्रोधादिस्तद्युक्तेन कृच्छ्रेदुःखदेनरकादौवि
धीयतेभोक्तुमधिक्रियते ॥ २ ॥ मृतेभ्यःमरणेभ्यः प्रमृतंमरणांतरं अविलंबेनपुनःपुनर्म्रियंतइत्यर्थः अथैतयोःपथोर्नकतरेणचनतानीमानिक्षुद्राण्यसकृदावर्तीनीतिश्रुतेः ॥ ३ ॥ ४ ॥ हस्तौअवाप्येतेप्रवेश्येतेयस्मि
न्नितिहस्तावापोहस्तनिगडस्तेननिगडिताःसंतोनास्तिकाःराष्ट्राद्दूरीकृताःव्यालादिमत्सुवनेषुगच्छंतिनिगडितहस्तत्वाच्चव्यालादीन्वारयितुमशक्ताःअत्यंतमुद्वेगंप्राप्नुवंतीत्यर्थः व्यालोदुष्टगजः ॥ ५ ॥ आतिथेयं
अतिथिहितंमृष्टान्नदानादि आत्मवतांजितचित्तानांयोगिनांमार्गंदेवयानं हस्तदक्षिणं हस्तोपलक्षितेनतत्कर्तव्येनदानादिनाकर्मणादक्षिणंअनुकूलं ॥ ६ ॥

पुलाकाः गर्नोष्मणाभक्तसिकथवन्नष्टवीजभावाः पूतिधान्यमितियावत् पुत्तिकाःमशकाः कारणंमुखादिहेतुः ॥ ७ ॥ शुभप्रज्ञाहेतुरपिधर्मएवचेत्तत्रप्रवृत्तिरपिपूर्वकर्मायत्तेतिकिंपुरुषकारेणेत्याशंक्याह सुशीघ्रमिति विधानंप्राक्कर्म धावंतंयतमानंअनुधावतिफलप्रदानेनानुसरति अन्वयमुक्त्वाव्यतिरेकमाह शेतेइति येनयेनयथाकृतंतंतंप्रति तथाप्राक्कर्मफलदमफलदंचभवति ॥ ८ ॥ कर्मप्राचीनंछायेवअनुविधीयतेपुरुषेणस्वस्यानुकूलंक्रियतेअनादौसंसारेऽनंतानांसतामसतांवाकर्मणामहंपूर्वमहंपूर्वमितिस्पर्धयास्वस्वफलदानाययुगपदुपस्थितानांयदैवकर्मअविकलःपुरुषकारोनुगृह्णातितदेवप्रभवतीत्यर्थः ॥ ९ ॥ येनेति भुंक्तेइतिवर्तमानार्थलट्प्रयोगेणऐहिकभोगएवप्राक्कर्मणःप्राबल्यंनत्वामुष्मिकभोगार्थायांयज्ञादिप्रवृत्तौ विधिप्रतिषेधशास्त्रानर्थक्यापत्तेरित्यर्थः नित्यंअपरिहार्यं ॥ १० ॥ स्वकर्मणःफलंस्वर्गपश्वादि

पुलाकाइवधान्येषुपुत्तिकाइवपक्षिषु ॥ तद्विधास्तेमनुष्याणांयेषांधर्मोनकारणं ॥ ७॥ सुशीघ्रमपिधावंतंविधानमनुधावति ॥ शेतेसहशयानेनयेनयेनयथाकृतं॥ ८॥ उपतिष्ठतितिष्ठंतंगच्छंतमनुगच्छति॥ करोतिकुर्वतःकर्मच्छायेवानुविधीयते॥ ९॥ येनयेनयथायद्यत्पुराकर्मसमीहितं॥ तत्तदेकनरोभुंक्तेनित्यंविहितमात्मना ॥ १० ॥ स्वकर्मफलनिक्षेपंविधानपरिरक्षितं ॥ भूतग्राममिमंकालःसमंतात्परिकर्षति ॥ ११ ॥ अचोद्यमानानियथापुष्पाणिचफलानिच ॥ स्वंकालंनातिवर्तंतेतथाकर्मपुराकृतं ॥ १२ ॥ संमानश्चावमानश्चलाभालाभौक्षयोदयौ॥ प्रवृत्तानिविवर्तंतेविधानांतेपुनःपुनः ॥ १३॥ आत्मनाविहितंदुःखमात्मनाविहितंसुखं॥ गर्भशय्यामुपादायभुज्यतेपौर्वदेहिकं॥ १४॥ बालोयुवाचवृद्धश्चयत्करोतिशुभाशुभं ॥ तस्यांतस्यामवस्थायांतत्फलंप्रतिपद्यते ॥ ॥ १५॥ यथाधेनुसहस्रेषुवत्सोविंदतिमातरं ॥ तथापूर्वकृतंकर्मकर्तारमनुगच्छति ॥ १६ ॥ समुन्नमग्रतोवस्त्रंपश्चाच्छुध्यतिकर्मणा ॥ उपवासैःप्रतप्तानांदीर्घसुखमनंतकं॥ १७ ॥ दीर्घकालेनतपसासेवितेनतपोवने ॥ धर्मनिर्धूतपापानांसंपद्यंतेमनोरथाः ॥ १८ ॥ शकुनानामिवाकाशेमत्स्यानामिवचोदके ॥ पदंयथानदृश्येततथाज्ञानविदांगतिः॥ १९॥

तदेवनिक्षेपरूपंविधानेनकर्मजन्यादृष्टेनरक्षितंगौणकर्मीभूतंभूतग्रामंप्रतिकालःसमनुकर्षति ॥ ११ ॥ १२ ॥ १३ ॥१४॥१५ ॥ १६ ॥ समुन्नंजलेनक्लिन्नं उदीक्लेदनेस्यनिष्ठायांरूपं संयुक्तमितिपाठेमलेनतिशेषः संस्विन्नमितिपाठेस्वेदेनमलिनं कर्मणाक्षालनेन उपवासःविषयत्यागः अनंतकंसुखंमोक्षः ॥१७॥ मनोरथाः ज्ञानलाभविषयाः ॥ १८ ॥ प्रागज्ञानानकार्यब्रह्मलोकंगच्छंतिकिंतुनतस्यप्राणाउत्क्रामंत्यत्रैवसमवनीयंतइतितत्त्वविदःप्राणादीनांप्रलयस्यश्रुद्धेप्रत्यगात्मन्येवश्रवणादात्माचनद्रष्टुंयोग्यइत्याशयेनाह शकुनानामिति ज्ञानविदांब्रह्मविदांगतिःपरायणंब्रह्मैवेत्यर्थः ब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेः ॥१९॥

उपालंभैःआक्षेपवाक्यैः व्यतिक्रमैःअपराधैः अलमुक्तैःपर्याप्तं पेशलंकौशलयुक्तंयथास्यात्तथा सत्कर्मभिःसद्वासनोदयात्साध्वीप्रज्ञासमुदेतीतिभावः ॥ २० ॥ इतिशांति॰मो॰नै॰भा॰एका
शीत्यधिकशततमोऽध्यायः ॥ १८१ ॥ ॥ ५ ॥ एवमष्टभिरध्यायैःक्रमादाशांजित्वापूर्वस्मिन्नेववयसिनिष्परिग्रहोनिरीहोहिंसाशून्यआजगरींवृत्तिमास्थितः प्रज्ञावान्सुकृतीब्रह्मविद्याधि
कारीनिरूपितः तत्रप्रसंगात्तत्रतत्रसंक्षेपेणात्मतत्त्वंचसूचितं यथाआजगरेऽनवसितमनंतदोषपारमित्यनेनआकाशस्येवनित्यत्वाद्विभुत्वाच्चात्मनःकालतोदेशतश्चपरिच्छेदाभावःपरेषांसंमतः अस्माकंत्वात्म
नित्रिविधभेदरूपोवस्तुपरिच्छेदोपिनास्ति यथापरेषामात्मांतरस्यपृथिव्यादेरात्मगतबुध्यादिगुणानांचपृथक्सत्त्वेनआत्मनिसजातीयविजातीयस्वगतभेदरूपोवस्तुपरिच्छेदोस्तिनतथास्माकमित्यखंडैकरस

॥१४॥ १२

अलमन्यैरुपालंभैःकीर्तितैश्चव्यतिक्रमैः ॥ पेशलंचानुरूपंचकर्तव्यंहितमात्मनः ॥ २० ॥ इतिश्रीमहाभारतेशांतिप॰मोक्षधर्मपर्वणिएकाशीत्य
धिकशततमोऽध्यायः ॥ १८१ ॥ ॥ ५ ॥ ॥ ६ ॥ युधिष्ठिरउवाच कुतःसृष्टमिदंविश्वंजगत्स्थावरजंगमं ॥ प्रलयेचकमभ्येतितन्मेब्रूहि
पितामह ॥ १ ॥ ससागरःसगगनःसशैलःसबलाहकः ॥ सभूमिःसाग्निपवनोलोकोयंकेननिर्मितः ॥ २ ॥ कथंसृष्टानिभूतानिकथंवर्णविभक्तयः ॥ शौचाशौ
चंकथंतेषांधर्माधर्मविधिःकथं ॥ ३ ॥ कीदृशोजीवतांजीवःक्वगच्छंतियेमृताः ॥ अस्माल्लोकादमुंलोकंसर्वंशंसतुनोभवान् ॥ ४ ॥ भीष्मउवाच अत्रा
प्युदाहरंतीममितिहासंपुरातनं ॥ भृगुणाभिहितंशास्त्रंभरद्वाजायपृच्छते ॥ ५ ॥ कैलासशिखरेदृष्ट्वादीप्यमानंमहौजसं ॥ भृगुंमहर्षिमासीनंभरद्वाजोन्वपृच्छ
त ॥ ६ ॥ ससागरःसगगनःसशैलःसबलाहकः ॥ सभूमिःसाग्निपवनोलोकोयंकेननिर्मितः ॥ ७ ॥ कथंसृष्टानिभूतानिकथंवर्णविभक्तयः ॥ शौचाशौचंकथं
तेषांधर्माधर्मविधिःकथं ॥ ८ ॥ कीदृशोजीवतांजीवःक्वगच्छंतियेमृताः ॥ परलोकमिमंचापिसर्वंशंसितुमर्हसि ॥ ९ ॥ एवंसभगवान्पृष्टोभरद्वाजेनसंशयं ॥
ब्रह्मर्षिर्ब्रह्मसंकाशःसर्वंतस्मैततोब्रवीत् ॥ १० ॥

मेकाद्वितीयंकूटस्थंवस्तुनिर्दिष्टं तथासृगालीये नद्वितीयस्यशिरसश्छेदनंविद्यतेक्वचित् नचपाणेस्तृतीयस्ययन्नास्तिनततोभयमिति आत्मातिरिक्तस्यद्वितीयशिरआदिवदत्यंतासत्त्वमुक्त्वातदेवदृढीकृतं तथा
शकुनानामिवाकाशेमत्स्यानामिवचोदके पदंयथानदृश्येतनथाज्ञानविदांगतिरितिब्रह्मविद्ब्रह्मैवभवतीतिचप्रतिपादितं ततश्चविकारिकारणाभावाज्जगज्जन्माद्यसंभवंमन्वानःपृच्छति कुतइति तत्रकुतइतिका ॥१४॥
लादृष्टेश्वरेच्छादिनिमित्तप्रश्नः कमभ्येतीतिउपादानप्रश्नः तत्रैवकार्यलयनियमात् ॥ १ ॥ केनेत्यवांतरकारणप्रश्नः ॥ २ ॥ कथमितिसृष्टिप्रकारप्रश्नः विभक्तयोविभागाः ॥ ३ ॥ जीवःकीदृशइतिजीवत
त्त्वप्रश्नः अमृताःमुक्ताः क्वअधिष्ठानेलीयंतइतिमुक्तिप्राप्यवस्तुप्रश्नः अस्माल्लोकात्इमंलोकंमुक्त्वा अमुंलोकं सर्वंचपूर्वपृष्टंनःअस्मभ्यंभवान्कथयतु ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

अखंडंसर्वकालंमांसंउपोष्यत्यक्त्वा मांसमित्यन्येषामप्युपलक्षणं यथोक्तंहठयोगे मांसंदधिकुलित्थंचलशुनंशाकमेवच कट्वम्लतिक्तपिण्याकहिंगुसौवीरसर्षपाः तैलंचवर्ज्यान्येतानियतात्मनोयोगिनासदा पुनरुष्णीकृतंद्रव्यमहितंचेतिकेचनेति ॥ ४६ ॥ पौरुषान्पुरुषप्रियान्शब्दान् ॥ ४७ ॥ अरतिःस्त्रीसंगाभावजमस्वास्थ्यं स्पर्शःस्त्र्यादिसंयोगजंसुखं ॥ ४८ ॥ दीपयंतिप्रकाशयंति आत्मानंत्वंपदार्थं आत्मनाबुद्ध्या दृश्यतेत्वग्र्ययाबुद्ध्येतिश्रुतेः ध्यानंध्येयाकारप्रत्ययप्रवाहः तत्रप्रत्ययैकतानताध्यानमितिसूत्रं अध्ययनंप्रणवजपः यथोक्तं जपाच्छ्रांतःपुनर्ध्यायेत्ध्यानाच्छ्रांतःपुनर्जपेत् जपध्यानपरिश्रांतआत्मा

अखंडमपिवामांसंसततंमनुजेश्वर॥ उपोष्यसम्यक्शुद्धात्मायोगीबलमवाप्नुयात् ॥ ४६॥ कामंजित्वातथाक्रोधंशीतोष्णेवर्षमेवच ॥ भयंशोकंतथाश्वासंपौरुषान्विषयांस्तथा॥ ४७॥ अरतिंदुर्जयांचैवघोरांतृष्णांचपार्थिव ॥ स्पर्शंनिद्रांतथातंद्रींदुर्जयांनृपसत्तम ॥ ४८॥ दीपयंतिमहात्मानःसूक्ष्ममात्मानमात्मना॥ वीतरागामहाप्रज्ञाध्यानाध्ययनसंपदा ॥ ४९ ॥ दुर्गस्त्वेषमहापंथाब्राह्मणानांविपश्चितां ॥ यःकश्चिद्व्रजतिह्यस्मिन्क्षेमेणभरतर्षभ ॥ ५० ॥ यथाकश्चिद्वनंघोरंबहुसर्पसरीसृपं॥ श्वभ्रवत्तोयहीनंचदुर्गमंबहुकंटकं॥ ५१ ॥ अभक्तमटवीप्रायंदावदग्धमहीरुहं॥ पंथानंतस्कराकीर्णंक्षेमेणाभिपतेद्युवा ॥ ५२ ॥ योगमार्गंतथासाद्ययःकश्चिद्व्रजतेद्विजः॥ क्षेमेणापरमेन्मार्गाद्बहुदोषोहिसस्मृतः॥ ५३॥ सुस्थेयंक्षुरधारासुनिशितासुमहीपते ॥ धारणासुतुयोगस्यदुःस्थेयमकृतात्मभिः॥ ५४॥ विपन्नाधारणास्तातनयंतिनशुभांगतिं॥ नेतृहीनायथानावःपुरुषानर्णवेनृप ॥ ५५॥ यस्तुतिष्ठतिकौंतेयधारणासुयथाविधि॥ मरणंजन्मदुःखंचसुखंचसविमुंचति॥ ५६॥ नानाशास्त्रेषुनिष्पन्नंयोगेष्विदमुदाहृतं॥ परंयोगस्ययत्कृत्यंनिश्चितंतद्द्विजातिषु॥ ५७॥ परंहितद्ब्रह्ममयंमहात्मन्ब्रह्माणमीशंवरदंचविष्णुं॥ भवंचधर्मंचषडाननंचयद्ब्रह्मपुत्रांश्चमहानुभावान् ॥ ५८॥ तमश्चकष्टंसुमहद्रजश्चसत्वंविशुद्धंप्रकृतिंपरांच॥ सिद्धिंचदेवींवरुणस्यपत्नींतेजश्चकृत्स्नंसुमहच्चधैर्यं॥ ५९॥ ताराधिपंखेविमलंसतारंविश्वांश्चदेवानुरगान्पितॄंश्च ॥ शैलांश्चकृत्स्नानुदधींश्चघोरान्नदीश्चसर्वाःसवनान्घनांश्च ॥ ६०॥

नंचविचारयेदिति ॥४९॥ यःकश्चिदित्यनेनात्राधिकारिदौर्लभ्यमुक्तं ॥५०॥५१॥५२॥५३॥ सुस्थेयंसुखेनस्थातुंशक्यं॥५४॥ नशुभांरोगाद्याघातवतीं॥५५॥५६॥ योगेषुयोगशास्त्रेषुकृत्यंकर्तुंयोग्यंफलमितियावत् ॥ ५७ ॥ ब्रह्मब्रह्मविष्ण्वादिस्रष्टृतुर्यमूर्तिरूपं तत्प्रधानंपरंकैवल्यात्मकंयोगफलंतथाब्रह्मविष्ण्वादिभावोपियोगफलमित्यर्थः महानुभावान्ऋषभकपिलादीन् ॥५८॥ तमोरजसीलयविक्षेपौयोगविघ्नौ सत्वंचधर्मज्ञानैश्वर्योपगमाभूदिति विशुद्धमित्युक्तं आत्मतत्त्वप्रकाशकत्वंविशुद्धता विशेतयोगीतिअपकृष्यते परांप्रकृतिंप्रकृतिलयत्वंचविशते वरुणस्यपत्नींसिद्धिंजलजयंतेजश्चविशतेइत्यनेनतेजोजयंसुमहच्चधैर्यमितिपृथ्वीजयंचप्राप्नोतीत्यर्थः ॥५९॥ ताराधिपादीनांमध्येयद्भावंवांछतितद्भावंइच्छयाप्राप्नोतीत्यर्थः यथोक्तंनिरुक्ते अथागमोयांयांदेवतांनिराहतस्यास्तस्यास्ताद्भाव्यमनुभवतीति ॥ ६० ॥

॥६१॥ ननुयथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवैतस्मादात्मनःसर्वएतआत्मानोव्युच्चरंतीतिपुरुषादेवब्रह्मादीनांसृष्टिःश्रूयतेतत्कथंब्रह्मादीन्प्राकृसिद्धान्योगीविशतइत्युच्यतेइत्याशंक्याह कथाचेति देवेपरमात्मनिविषयेयेयंकथाजगत्कर्तृत्वादिनिरूपणात्मिका आत्मनआकाशःसंभूतइत्यादिश्रुतिभिःप्रसक्ता सेयंशुभैवनास्मन्मतविरुद्धेत्यर्थः यतःयोगीनारायणात्मानारायणस्तुर्यमूर्तौईश्वरेअयमहंनारायणइत्यहंग्रहेणप्रणिहितआत्मायेनसतथा तंयथायथोपासतेतथैवभवतीतिश्रुतेर्नारायणभावंप्राप्तोमहात्माव्यापकचित्तः सर्वानभिभूयसर्वाधिकोभूत्वामर्त्यान्पंचभौतिकान्जरायुजादीन्कुरुतेसंकल्पमात्रेणसृजति अतोयोगिनांसंप्रज्ञातेभूतस्रष्टृत्वंव्युत्थानेभौतिकजंतुस्रष्टृत्वंचास्तीतिनकयाचित्श्रुत्यायोगशास्त्रंविरुध्यते वेदांतिभिरप्यस्ययोगैश्वर्यस्यहर्तुमशक्यत्वात् शास्त्रांत्यपादेऽभ्युपगतत्वाच्चेतिनकिंचिदवद्यं ॥६२॥ इतिशांति०मोक्ष०नै०भा० त्रिशततमोऽध्यायः ॥३००॥ ॥५॥ ॥५॥ सूचीकटाहन्यायेनयोगमुक्त्वासांख्यंवक्तुमारभते सम्यगिति ॥१॥२॥ मेमत्तःइदंवक्ष्यमाणंतत्त्व

नागान्नगान्यक्षगणान्दिशश्चगंधर्वसंघान्पुरुषान्स्त्रियश्च ॥ परस्परंप्राप्यमहान्महात्माविशेतयोगीनचिराद्विमुक्तः ॥ ६१ ॥ कथाचयेयंनृपतेप्रसक्तादेवेमहावीर्यमतौशुभेयं ॥ योगीससर्वानभिभूयमर्त्यान्नारायणात्माकुरुतेमहात्मा ॥ ६२ ॥ इतिश्रीमहाभारतेशांति०मोक्ष०योगविधौत्रिशततमोऽध्यायः ॥३००॥ ॥५॥ युधिष्ठिरउवाच सम्यक्कयायंनृपतेवर्णितःशिष्टसंमतः ॥ योगमार्गोयथान्यायंशिष्यायेहहितैपिणा ॥ १ ॥ सांख्येत्विदानींकार्त्स्न्येनविधिंप्रब्रूहिपृच्छते ॥ त्रिषुलोकेषुयज्ज्ञानंसर्वंतद्विदितंहिते ॥२॥ भीष्मउवाच शृणुमेत्वमिदंसूक्ष्मंसांख्यानांविदितात्मनां ॥ विहितंयतिभिःसर्वैःकपिलादिभिरीश्वरैः ॥ ३ ॥ यस्मिन्नविभ्रमाःकेचिद्दृश्यंतेमनुजर्षभ ॥ गुणाश्चयस्मिन्बहवोदोषहानिश्चकेवला ॥ ४ ॥

मितिशेषः यतिभिःऋषभादिभिः विहितंप्रकाशितं ॥३॥ तदेवस्तौति यस्मिन्निति प्राणावैसत्यंतेषामेषसत्यमितिश्रुत्याप्राणोपलक्षितस्यकृत्स्नस्यप्रपंचस्ययावद्व्यवहारमबाध्यत्वलक्षणंसत्वमन्यत्सर्वथैवाबाध्यत्वंसत्वंप्रत्यगात्मनइतिदर्शितं तत्राद्यमादायकृत्स्नोपिकर्मोपास्त्यादिव्यवहारःसिध्यति अंत्यमादायनेहनानास्तिकिंचनेत्यादिर्जगतोबाधादिकंसंगच्छते मतांतरेतुसर्वस्यभेदस्यपारमार्थिकत्वादिदंसर्वंयदयमात्मानेहनानास्तीत्याद्याअध्यारोपापवादन्यायेनात्मैक्यप्रतिपादनपराःश्रुतयउपरुध्यंतइतितेषांजगत्सत्यत्वविभ्रमोदृश्यते केषांचिदात्मन्यप्यसत्वभ्रमोस्तिनत्वस्माकंक्वचिदप्यंशेविभ्रमोस्तीत्यर्थः गुणाःकर्मज्ञानकांडयोर्दृष्टिभेदेनाविरोधादयः दोषाश्चबह्वात्मवादेएकस्मिन्शरीरेसर्वात्मसान्निध्याविशेषादेकस्यभोगेनसर्वेषांभोगापत्तिरित्यादयस्तेषांहानिः ॥४॥

ज्ञानेनेति तत्त्वदर्शनोन्मुखंचेतस्तत्त्वस्यतमःपिहिततयानधिगमात्तत्रशुक्तौरजतादिवन्मानुषत्वासुरत्वादिभावंपश्यति तत्रउत्तरोत्तरज्ञानेनपूर्वंपूर्वंभ्रमान्परिसंख्यायबाधित्वाप्रामुवंति शुभंमोक्षमितित्रयोदशे नसंबंधः सदोषान्आगमापायितयामिथ्यात्वदोषयुक्तान् यथोक्तं आदावंतेचयन्नास्तिवर्तमानेपितत्तथेति नासतोविद्यतेभावइतिच ज्ञात्वापरिसंख्यायेतिसर्वत्रयोज्यं तत्रयथायथातत्त्वावरकस्यतमसःस म्यगवेक्षणेनापगमस्तथाउत्तरोत्तरमुत्कृष्टविषयोपस्थितिर्यावत्ब्राह्मणोविषयान्पश्यतिप्राग्वत् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ अत्रगुणाअप्यागमापायितयादोषाएवेतितेपिहानार्थमेवज्ञात व्याः ॥ १२ ॥ सांख्यज्ञानेपिदोषाःविद्वत्त्वाभिमानादयः गुणाःअद्वेष्टृत्वादयः ॥ १३ ॥ सत्वमिति आनंदःप्रीतिरुद्रेकःप्राकाश्यंपुण्यशीलता संतोषःश्रद्दधानत्वमार्जवंत्यागशीलता ऐश्वर्यंचेतिसत्वस्यगुणा

ज्ञानेनपरिसंख्यायसदोषान्विषयान्नृप ॥ मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ॥ ५ ॥ राजसान्विषयान्ज्ञात्वायक्षाणांविषयांस्तथा ॥ विषयानौरगा न्ज्ञात्वागांधर्वविषयांस्तथा ॥ ६ ॥ पितॄणांविषयान्ज्ञात्वातिर्यक्षुचरतांनृप ॥ सुपर्णविषयान्ज्ञात्वामरुतांविषयांस्तथा ॥ ७ ॥ राजर्षिविषयान्ज्ञात्वाब्रह्मर्षिवि षयांस्तथा ॥ आसुरान्विषयान्ज्ञात्वावैश्वदेवांस्तथैवच ॥ ८ ॥ देवर्षिविषयान्ज्ञात्वायोगानामपिचेश्वरान् ॥ प्रजापतीनांविषयान्ब्रह्मणोविषयांस्तथा ॥ ९ ॥ आयुषश्चपरंकालंलोकेविज्ञायतत्त्वतः ॥ सुखस्यचपरंतत्त्वंविज्ञायवदतांवर ॥ १० ॥ प्राप्तेकालेचयद्दुःखंपततांविषयैषिणां ॥ तिर्यक्षुपततांदुःखंपततांनरकेच यत् ॥ ११ ॥ स्वर्गस्यचगुणान्कृत्स्नान्दोषान्सर्वांश्चभारत ॥ वेदवादेयेपिदोषागुणायेचापिवैदिकाः ॥ १२ ॥ ज्ञानयोगेचयेदोषागुणायोगेचयेनृप ॥ सांख्यज्ञा नेचयेदोषास्तथैवचगुणान्नृप ॥ १३ ॥ सत्वंदशगुणंज्ञात्वारजोनवगुणंतथा ॥ तमश्चाष्टगुणंज्ञात्वाबुद्धिंसप्तगुणांतथा ॥ १४ ॥ षड्गुणंचमनोज्ञात्वानभःपंचगु णंतथा ॥ बुद्धिंचतुर्गुणांज्ञात्वातमश्चत्रिगुणंतथा ॥ १५ ॥ द्विगुणंचरजोज्ञात्वासत्वमेकगुणंपुनः ॥ मार्गंविज्ञायतत्त्वेनप्रलयेप्रेक्षणंतथा ॥ १६ ॥

दशनिसर्गजाः आस्तिकत्वमकार्पण्यंसुखदुःखोपसेवनं भेदःपुरुषताचैवकामक्रोधौमदस्तथा दर्पद्वेषातिवादाश्चनवैतेराजसागुणाः तमोमोहोमहामोहस्तामिस्रश्चांधपंचमः निद्राप्रमादआलस्यमित्यष्टौतमसो गुणाइति बुद्धिसप्तगुणांमहदहंकारपंचतन्मात्ररूपां ॥ १४ ॥ मनःश्रोत्रादिपंचकेनसहषड्रूपं नभःवियदादिपंचकरूपं बुद्धिःसंशयनिश्चयगर्वस्मरणरूपा तमःअप्रतिपत्तिविप्रतिपत्तिविपरीतप्रतिपत्तिरूपं ॥ ॥ १५ ॥ रजःप्रवृत्तिदुःखरूपं सत्वंप्रकाशरूपं बुध्यादीनांपुनर्ग्रहणंप्रातिलोम्येनसत्वेतत्प्रविलापनार्थं एतेपंचपंचाशत् एतेषांमध्येतत्त्वेनयाथात्म्येनमार्गंआत्मप्रापकंसत्वादिप्रधानंविज्ञायहानार्थंतत्प्रतिवं धकंचरजस्तमःप्रधानंगुणजातंविज्ञायप्रलयेप्राकृतलयेतथाप्रेक्षणेआत्मतत्त्वालोचनेच ॥ १६ ॥

ज्ञानविज्ञानसंपन्नाः एतान्सर्वान्यथतोऽनुभवतश्वज्ञात्वाकारणैर्मोक्षोपयोगिभिः सात्विकैर्भावैर्भावितात्मानोवासितचित्ताःमोक्षंप्राप्नुवंति सूक्ष्माःरविरश्मयोवायवोवा ॥ १७ ॥ अत्रप्राणेभ्योदेवादेवेभ्यो लोकाइतिश्रुत्यनुसारादिंद्रियेभ्योदेवतास्तदृष्टिंदेवताभ्योलोकसृष्टिंचाभ्युपेत्यब्रह्मणिसर्वलयमाह रूपेणेति रूपेणरूपवताद्रव्येणदृष्टिचक्षुरिंद्रियंसंयुक्तंकुंडलेनकनकमिव चक्षुर्व्यतिरिक्तोरूपद्रव्यदेवतादिर्विषयोनास्तीत्यर्थः एवमग्रेपियावन्मोक्षंज्ञेयम् ॥ १८ ॥ वायुंत्वगिंद्रियदेवतांनभसिस्वकारणेसंश्रितं एतच्चसर्वदेवतोपलक्षणं मोहंवैचित्यंतमसितमोगुणे लोभंरजःकार्यमर्थेषु तमसोर्थानांचवियोगेमोहलोभौन भवतइतिदृष्टांतमात्रमिदं ॥ १९ ॥ क्रांतपादविक्षेपे बलेहस्तेंद्रिये कोष्ठेउदरे देवींपृथ्वीं ॥ २० ॥ महतिमहत्तत्त्वकार्येहंकारे महत्बुद्धौमहत्तत्वे ॥ २१ ॥ आत्मनिजीवत्वंपदार्थे ॥ २२ ॥ ईशेमायाविशिष्टेदेवेनारायणेचेतितस्यैवविशेषणे तत्पदार्थे मोक्षेकैवल्येनिर्विकल्पवस्तुनि तच्चनकचित्सक्तं स्वेमहिम्निप्रतिष्ठितइतिश्रुतेः ॥ २३ ॥ ननुरूपादीनांमोक्षमात्रत्वोक्तिरागममात्रंनत्वत्रकाचिदुपपत्तिरस्तीत्याशंक्याह ज्ञात्वेति सत्वगुणंदेहबुद्धिसत्वमयंस्वामंशरीरंषोडशभिर्गुणैःकार्यैः प्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवींद्रियंमनोन्नमन्नाद्वीर्यंतपोमंत्राःकर्मलोकेपुनामचेतिश्रुत्युक्तैःप्राणादिनामांतैर्वृतंज्ञात्वा स्वभावंप्राक्कर्मचतदुत्पत्तिकारणंचेतनांधीवृत्तिंचतदवभासिकांदेहसमाश्रितेलिंगदेहाश्रितेज्ञात्वाच मध्यस्थंउदासीनंएकंआत्मानंयस्मिन्पापंनविद्यतइतिअसंगंजानीयात् यथैकेनकर्मणास्वाप्नप्रपंचविभ्रमेआत्मनःअसंगत्वंस्थूलशरीरजदुःखाननुवृत्तेर्दृश्यते एवंजाग्रद्भ्रमेपिविपर्ययेपिणांविषयवासनावतांद्वितीयंकर्मकारणंविज्ञायइंद्रियादीनात्माश्रितान्आत्मन्यविद्ययाअध्यारोपितान्जानीयादित्यध्याहृत्ययोज्यं अयमर्थः यथास्वप्नेएकस्यैवात्मनोवासनावशात्सर्वजगदात्मकत्वंआत्मनश्चासंगत्वंदृश्यते एवंजाग्रद्भ्रमेपिज्ञेयमितिसार्धश्लोकद्वयार्थः ॥ २४ ॥

ज्ञानविज्ञानसंपन्नाःकारणैर्भाविताःशुभाः॥ प्राप्नुवंतिशुभंमोक्षंसूक्ष्माइवनभःपरं॥ १७॥ रूपेणदृष्टिंसंयुक्तांघ्राणंगंधगुणेनच॥ शब्देसक्तंतथाश्रोत्रंजिह्वारसगुणेषुच॥ १८॥ तनुंस्पर्शेतथासक्तांवायुंनभसिचाश्रितं॥ मोहंतमसिसंयुक्तंलोभमर्थेषुसंश्रितं॥ १९॥ विष्णुंक्रांतेबलेशक्रंकोष्ठेसक्तंतथानलं॥ अप्सुदेवींसमासक्ताभपस्तेजसिसंश्रिताः॥ २०॥ तेजोवायौतुसंसक्तंवायुंनभसिचाश्रितं॥ नभोमहतिसंयुक्तंमहद्बुद्धौचसंश्रितं॥ २१॥ बुद्धिंतमसिसंसक्तांतमोरजसिसंश्रितं॥ रजःसत्वेतथासक्तंसत्वंसक्तंतथात्मनि॥ २२॥ सक्तमात्मानमीशेचदेवेनारायणेतथा॥ देवंमोक्षेचसंसक्तंमोक्षंसक्तंतुनक्वचित्॥ २३॥ ज्ञात्वासत्वगुणंदेहंवृतंषोडशभिर्गुणैः॥ स्वभावंचेतनांचैवज्ञात्वादेहसमाश्रिते॥ २४॥

॥ २५ ॥ एतस्माद्वासनामयादवस्थात्रयसंचरादात्मनोमोक्षस्यदुर्लभत्वंवक्ष्यमाणैःकारणैर्विज्ञायकश्चिन्मोक्षबुद्धिंसमाश्रितोभवतीतिचतुर्दशेनान्वयः ॥ २६ ॥ यःप्राणादीन्पंचैकीकृत्याधोनयतिसोऽधोऽनिलःषष्ठः एवंप्रवहऊर्ध्वनेतासप्तमः ॥ २७ ॥ तएतेसप्तवायवःप्रत्येकंसप्तधाविहिताः अयंभावः यथैकस्मिन्वटेऽनेकानिबीजानितेषुचबीजेषुप्रतिबीजमनंतानिबीजानितद्वदेकस्मिन्देहेसप्तप्राणाःप्रतिप्राणंस

मध्यस्थमेकमात्मानंपापंयस्मिन्नविद्यते॥द्वितीयंकर्मविज्ञायनृपतेविषयैषिणां॥२५॥इंद्रियाणींद्रियार्थांश्चसर्वानात्मनिसंश्रितान्॥दुर्लभत्वंचमोक्षस्यविज्ञायश्रुतिपूर्वकं॥ २६ ॥ प्राणापानौसमानंचव्यानोदानौचतत्त्वतः॥अधश्चैवानिलंज्ञात्वाप्रवहंचानिलंपुनः ॥ २७॥ सप्तवातांस्तथाज्ञात्वासप्तधाविहितान्पुनः॥ प्रजापतीनृषींश्चैवमार्गांश्चैवबहून्वरान्॥ २८॥ सप्तर्षींश्चबहून्ज्ञात्वाराजर्षींश्चपरंतप ॥ सुरर्षीन्महतश्चान्यान्ब्रह्मर्षीन्सूर्यसन्निभान् ॥ २९ ॥ ऐश्वर्याच्च्यावितान्दृष्ट्वाकालेनमहतानृप॥ महतांभूतसंघानांश्रुत्वानाशंचपार्थिव ॥ ३० ॥ गतिंचाप्यशुभांज्ञात्वानृपतेपापकर्मिणां ॥ वैतरण्यांचयद्दुःखंपतितानांयमक्षये॥ ३१ ॥ योनीषुचविचित्रासुसंसारानशुभांस्तथा॥ जठरेचाशुभेवासंशोणितोदकभाजने॥ ३२ ॥ श्लेष्ममूत्रपुरीषेचतीव्रगंधसमन्विते॥ शुक्रशोणितसंघातेमज्जास्नायुपरिग्रहे॥ ३३ ॥ शिराशतसमाकीर्णेनवद्वारेपुरेऽशुचौ॥ विज्ञायहितमात्मानंयोगांश्चविविधान्नृप॥३४॥ तामसानांचजंतूनांरमणीयावृतात्मनां॥ सात्विकानांचजंतूनांकुत्सितंभरतर्षभ॥ ३५॥ गर्हितंमहतामर्थेसांख्यानांविदितात्मनां॥ उपप्लवांस्तथाघोरान्शशिनस्तेजसस्तथा ॥ ३६॥ ताराणांपतनंदृष्ट्वानक्षत्राणांचपर्ययं॥ द्वंद्वानांविप्रयोगंचविज्ञायकृपणंनृप ॥ ३७॥ अन्योन्यभक्षणंदृष्ट्वाभूतानामपिचाशुभं ॥ बाल्येमोहंचविज्ञायक्षयंदेहस्यचाशुभं॥ ३८॥ रागेमोहेचसंप्राप्तेक्वचित्सत्वंसमाश्रितं ॥ सहस्रेषुनरःकश्चिन्मोक्षबुद्धिंसमाश्रितः ॥ ३९ ॥ दुर्लभत्वंचमोक्षस्यविज्ञायश्रुतिपूर्वकं ॥ बहुमानमलब्धेषुलब्धेमध्यस्थतांपुनः॥ ४० ॥ विषयाणांचदौरात्म्यंविज्ञायनृपतेपुनः॥ गतासूनांचकौंतेयदेहान्दृष्ट्वातथाशुभान्॥ ४१ ॥ वासंकुलेषुजंतूनांदुःखंविज्ञायभारत॥ ब्रह्मघ्नानांगतिंज्ञात्वापतितानांसुदारुणां॥ ४२॥ सुरापानेचसक्तानांब्राह्मणानांदुरात्मनां॥ गुरुदारप्रसक्तानांगतिंविज्ञायचाशुभां॥ ४३॥

प्तसप्तप्राणाएवमुत्तरोत्तरमितिजगदानंत्यमुक्तं तस्मात्संसारबीजस्याज्ञानस्यतत्त्वज्ञानेनोच्छेदयतितव्यमितिभावः ॥ २८ ॥ २९ ॥ ननुसंत्यनेकेप्राजापत्यादिदेहाएवमुखमयाःकिंमोक्षेणेत्याशंक्यतेषामप्यैश्वर्यस्यांतवत्त्वान्नेत्याह ऐश्वर्यादिति ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ उपप्लवान्उपरागान् तेजसःसूर्यस्य ॥ ३६ ॥ द्वंद्वानांदंपतीनां ॥ ३७ ॥ ३८ ॥ क्वचित्पुंसि ॥ ३९ ॥ बहुमानंअत्यादरं मध्यस्थतांऔदासीन्यं ॥ ४० ॥ दौरात्म्यंबंधहेतुतां ॥ ४१ ॥ कुलेषुगृहेषु ॥ ४२ ॥ ४३ ॥

॥ ४४ ॥ ४५ ॥ संवत्सरक्षयोबृहस्पतेर्मध्यमराशिभोगयोरंतरालेसूर्यस्यद्विरेकराशिसंक्रमेभवति मासक्षयोदर्शयोरंतरालेसूर्यसंक्रांतिद्वयं ॥ ४६ ॥ पक्षक्षयःसार्धचतुर्दशदिनमध्येपर्वद्वयंनदात्रयोदशभिर्दिनैःपक्षोभवति दिवसक्षयःसूर्योदययोरंतरालेतिथित्रयस्पर्शः कालाभिमानिदेवतानामपिक्षयोदयौदृश्येतेकिमुतकाल्यमानानामस्मदादीनामितिभावः ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ बाह्यदोषानु

॥१९५॥

जननीषुचवर्तंतेयेनसम्यग्युधिष्ठिर॥ संदंवकेषुलोकेषुयेनवर्ततिमानवाः ॥४४॥ तेनज्ञानेनविज्ञायगतिंचाशुभकर्मणां॥ तिर्यग्योनिगतानांचविज्ञायगतयःपृथक् ॥ ४५ ॥ वेदवादांस्तथाचित्रानृतूनांपर्ययांस्तथा ॥ क्षयंसंवत्सराणांचमासानांचक्षयंतथा ॥ ४६ ॥ पक्षक्षयंतथादृष्ट्वादिवसानांचसंक्षयं ॥ क्षयंवृद्धिंचचंद्रस्यदृष्ट्वाप्रत्यक्षतस्तथा ॥ ४७॥ वृद्धिंदृष्ट्वासमुद्राणांक्षयंतेषांतथापुनः ॥ क्षयंधनानांदृष्ट्वाचपुनर्वृद्धिंतथैवच ॥ ४८॥ संयोगानांक्षयंदृष्ट्वायुगानांचविशेषतः ॥ क्षयंचदृष्ट्वाशैलानांक्षयंचसरितांतथा ॥ ४९ ॥ वर्णानांचक्षयंदृष्ट्वाक्षयांतंचपुनःपुनः ॥ जरामृत्युस्तथाजन्मदृष्ट्वादुःखानिचैवह ॥ ५० ॥ देहदोषांस्तथाज्ञात्वातेषांदुःखंचतत्त्वतः ॥ देहविक्लवतांचैवसम्यग्विज्ञायतत्त्वतः ॥ ५१ ॥ आत्मदोषांश्चविज्ञायसर्वानात्मनिसंश्रितान् ॥ स्वदेहादुत्थितान्गंधांस्तथाविज्ञायचाशुभान् ॥५२॥ युधिष्ठिरउवाच कान्स्वगात्रोद्भवान्दोषान्पश्यस्यमितविक्रम ॥ एतन्मेसंशयंकृत्स्नंवक्तुमर्हसितत्त्वतः ॥ ५३ ॥ भीष्मउवाच पंचदोषान्प्रभोदेहेप्रवदंतिमनीषिणः ॥ मार्गज्ञाःकापिलाःसांख्याःशृणुतानरिसूदन ॥ ५४ ॥ कामक्रोधौभयंनिद्रापंचमःश्वासउच्यते ॥ ५५ ॥ एतेदोषाःशरीरेषुदृश्यंतेसर्वदेहिनां ॥ छिंदंतिक्षमयाक्रोधंकामंसंकल्पवर्जनात् ॥ ५६ ॥ सत्वसंसेवनान्निद्रामप्रमादाद्भयंतथा ॥ छिंदंतिपंचमंश्वासमल्पाहारतयानृप ॥ ५७॥ गुणान्गुणशतैर्ज्ञात्वादोषान्दोषशतैरपि ॥ हेतून्हेतुशतैश्चित्रैश्चित्रान्विज्ञायतत्त्वतः ॥ ५८ ॥ अपांफेनोपमंलोकंविष्णोर्मायाशतैर्वृतं ॥ चित्रभित्तिप्रतीकाशंनलसारमनर्थकं ॥ ५९ ॥ तमःश्वभ्रनिभंदृष्ट्वावर्षबुद्बुदसंनिभं ॥ नाशप्रायंसुखाद्धीनंनाशोत्तरमिहावशं ॥ ६० ॥ रजस्तमसिसंमग्नंपंकेद्विपमिवावशं ॥ सांख्याराजन्महाप्राज्ञास्त्यक्त्वास्नेहंप्रजाकृतं ॥६१॥ ज्ञानयोगेनसांख्येनव्यापिनामहतानृप ॥ राजसानशुभान्गंधांस्तामसांश्चतथाविधान् ॥६२॥

॥१९५॥

कादेहजान्दोषानाह स्वदेहादिति उत्थितान्दोषानित्यनुषंगः ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ नलसारंनलतृणवदंतःसारहीनं ॥ ५९ ॥ नाशप्रायंनाशबहुलं ॥६०॥६१॥६२॥

शुभाशुभांश्चगंधान्तपोदंडेनज्ञानशस्त्रेणधीकुठारेणच्छित्वायतयःसागरंतरंतीतिदशमेनसंबंधः ॥६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ तीर्त्वाचेति जन्मईदृशेनालोचनेनज न्मयुक्तंस्थूलंशरीरंतीर्त्वाविस्मृत्यविमलंनभःप्रविशंति देहाध्यासापायेव्योमसंविदुदेतीत्यर्थः ॥ ७२ ॥ तत्रेति तस्मिन्हार्देव्योम्निपद्मतंतुवत् यथाकमलनालेनांतःसुषिरेणजलंमुखेनाकृष्यमाणमंतःप्रविश तितद्वत् आत्मनिप्रणिधीयमानमनोद्वारासूर्योंऽतराविश्यतत्रैवत्द्दयाकाशेसांख्यान्प्रतिस्वनाडीभिःसंबंधाच्चतुर्दशभुवनगनान्विषयान्वहतिप्रापयति प्रवहन्विषयान्नित्यनेन विषयैःसहसूर्यस्यनित्यसंबंधोदर्शि तः व्योमसंविदुदयेसांख्यस्यसार्वज्ञ्यंसार्वात्म्यंसर्वभोगभाक्त्वंचोदेतीत्यर्थः एतेनप्रत्यगात्मस्थाएवविषयामुकुरमुखवदज्ञानवशात्पराक्त्वेनभांनीत्यात्माद्वैतमुपपादितं हार्दनाडीनांसूर्यरश्मिभिःसंबंधस्तेपांचब्रह्मां डेनसंबंधश्छांदोग्यादावुक्तःप्रागेवोदाहृतः ॥ ७३ ॥ तत्रेति तत्रहार्दाकाशेतांस्तेजोबन्नात्मकान्विषयान्प्रवहसंज्ञकोवायुःप्रतिगृह्णातिस्वात्मसात्करोति तथाचश्रुतिः वायुर्ह्येवैतान्सर्वान्संवृंक्तेइति किंकृत्वा

पुण्यांश्वसात्विकान्गंधान्स्पर्शजान्देहसंश्रितान् ॥ छित्वाशुज्ञानशस्त्रेणतपोदंडेनभारत ॥ ६३ ॥ ततोदुःखोदकंघोरंचिंताशोकमहाह्रदं ॥ व्याधिमृत्युमहाग्राहंमहाभयमहोरगं ॥ ६४ ॥ तमःकूर्मंरजोमीनंप्रज्ञयासंतरंत्युत ॥ स्नेहपंकंजरादुर्गंज्ञानदीपमरिंदम ॥ ६५ ॥ कर्मागाधंसत्यतीरंस्थितव्रतमरिंदम ॥ हिंसाशीघ्रमहावेगंनानारससमाकरं ॥ ६६ ॥ नानाप्रीतिमहारत्नंदुःखज्वरसमीरणं ॥ शोकतृष्णामहावर्ततीक्ष्णव्याधिमहागजं ॥ ६७ ॥ अस्थिसंघातसंघट्टंश्लेष्मफेनमरिंदम ॥ दानमुक्ताकरंघोरंशोणितह्रदविद्रुमं ॥ ६८ ॥ हसितोत्कुष्टनिर्घोषंनानाज्ञानसुदुस्तरं ॥ रोदनाश्रुमलक्षारंसंगत्यागपरायणं ॥ ६९ ॥ पुत्रदारजलौकोघंमित्रबांधवपत्तनं ॥ अहिंसासत्यमर्यादंप्राणत्यागमहोर्मिणं ॥ ७० ॥ वेदांतगमनद्वीपंसर्वभूतदयोदधिं ॥ मोक्षदुर्लभविषयंवडवामुखसागरं ॥ ७१ ॥ तरंतियतयःसिद्धांज्ञानयानेनभारत ॥ तीर्त्वातिदुस्तरंजन्मविशंतिविमलंनभः ॥ ७२ ॥ तत्रतान्सुकृतीन्सांख्यान्सूर्योवहतिरश्मिभिः ॥ पद्मतंतुवदाविश्यप्रवहन्विषयान्नृप ॥ ७३ ॥ तत्रतान्प्रवहोवायुःप्रतिगृह्णातिभारत ॥ वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् ॥ ७४ ॥ सूक्ष्मःशीतःसुगंधीचसुखस्पर्शश्चभारत ॥ सप्तानांमरुतांश्रेष्ठोलोकान्गच्छतियःशुभान् ॥ सतान्वहतिकौंतेयनभसःपरमांगतिं ॥ ७५ ॥

वीतरागान् यतीन् अपेक्ष्येतिशेषः संप्रज्ञानसुखास्वादसक्तेसांख्येवायुर्विषयान्नसंहरति अन्यथातुसंहरतीत्यर्थः अतएवसमाधिप्रकृत्योक्तं गौडपादीये नास्वादयेत्सुखंतत्रेति ॥ ७४ ॥ सूक्ष्मइति सूक्ष्मस्त्वगिंद्रियाग्राह्यस्पर्शः ननुसूर्यरश्मिसंबंधेपिब्रह्मांडंनहार्दाकाशेप्रवेष्टुमर्हति अत्रत्यानांघटादीनांसूर्यास्तोत्तरंलोकांतरसंबंधादर्शनादित्याशंक्याह सप्तानामिति तान्पिंडब्रह्मांडरूपान्विषयान् यथायंप्रवहोवायुःदेहेनसंबंधात्स्वयंलोकान्प्रतिगच्छति पिंडंचतत्तल्लोकान्प्रतिवहति एवंनभसःपरमांगतिंहार्दाकाशंगच्छतिब्रह्मांडंचतंप्रतिवहति तथाचब्रह्मांडंवातरज्जुभिःसूर्यमंडलेनिबद्धमतोहार्दनभसिसूर्यप्रवेशेनब्रह्मांडस्यापिप्रवेशोयुज्यते अत्रत्यघटादीनांतुरात्रावपिसूर्यरश्मिसंबंधविघटनंनास्तीतिनतैःसहदेशांतरगमनप्रसक्तिरस्ति अतोयुक्तमुक्तंतत्रतानसुकृतीनित्यादि ॥ ७५ ॥

नभइति तमसः सूक्ष्मतमः परिणामो व्योमसंविनूनभआख्या रजसः परमां गतिमहंकारं नयति सत्वस्य परमां गतिं महत्तत्त्वमस्मितामात्रं शुद्धत्वंपदार्थं तस्यापि परमा गतिः प्रभुस्तत्पदार्थस्तस्यापि निरुपाधिचिन्मात्रमित्यर्थः ॥ ७६ ॥ ७७ ॥ ७८ ॥ योगवत्सांख्येपि शौचादिकंतुल्यमित्युक्तं नदत्रोपसंहरति निर्द्वंद्वानामिति सेयमात्मनिष्ठा योगैर्विषयेभ्यश्चित्तवृत्तेर्निरोधइत्युच्यते सांख्यैस्तु नत्तद्विषयसहितानां वृत्तीनां लवणोदकन्यायेन प्रविलापनमित्युच्यते एवमयं भाषाभेदएव शमादिसाधनं कैवल्यं च फलं पक्षद्वयेपि समानमिति प्रागुक्तं न प्रस्मर्तव्यं ॥ ७९ ॥ भगवंतं षड्गुणैश्वर्यसंपन्नं परमात्मानमेव परं मोक्षाख्यं स्थानं प्राप्य आजन्ममरणं सर्वज्ञत्वाज्जन्ममरणादिकं स्मरंति न वा मोक्षे विशेषविज्ञानमस्ति न वेति प्रश्नः कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति यएवं वेदाहं ब्रह्मास्मीति सइदं सर्वं भवतीति मोक्षे सार्वज्ञ्यसार्वात्म्ययोः श्रवणात्

नभोवहति लोकेश रजसः परमां गतिं ॥ रजोवहति राजेंद्र सत्वस्य परमां गतिं ॥ ७६ ॥ सत्वं वहति शुद्धात्मन्परं नारायणं प्रभुं ॥ प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ ७७ ॥ परमात्मानमासाद्य तद्भूतायतनामलाः ॥ अमृतत्वाय कल्पंते न निवर्तंति वा विभो ॥ ७८ ॥ परमा सा गतिः पार्थ निर्द्वंद्वानां महात्मनां ॥ सत्यार्जवरतानां वै सर्वभूतदयावतां ॥ ॥ ७९ ॥ युधिष्ठिरउवाच स्थानमुत्तममासाद्य भगवंतं स्थिरव्रताः ॥ आजन्ममरणं वा ते स्मरंत्युत न वानघ ॥ ८० ॥ यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि ॥ त्वदृते पुरुषं नान्यं प्रष्टुमर्हामि कौरव ॥ ८१ ॥ मोक्षदोषो महानेष प्राप्य सिद्धिगतानृषीन् ॥ यदि तत्रैव विज्ञाने वर्ततेयनयः परे ॥ ८२ ॥ प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप ॥ मग्नस्य हि परं ज्ञानं किं नदुःखतरं भवेत् ॥ ८३ ॥ भीष्मउवाच यथान्यायं त्वया तात प्रश्नः पृष्टः सुसंकटः ॥ बुधानामपि संमोहः प्रश्नेस्मिन्भरतर्षभ ॥ ८४ ॥ अत्रापि तत्त्वं परमं शृणु सम्यङ्मयेरितं ॥ बुद्धिश्च परमा यत्र कापिलानां महात्मनां ॥ ८५ ॥

यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति विशेषविज्ञानाभावश्रुतेश्च संशयः ॥ ८० ॥ ८१ ॥ एषद्विविधोपि मोक्षे महान्दोषः स्फुरति सिद्धिगतान्मोक्षप्रतिपादकान् ऋषीन्मंत्रान्प्राप्य स्फुरति परस्परविरुद्धस्यैकत्र पक्षद्वयस्यासंभवात् अन्यतरांगीकारेऽवश्यकर्तव्येऽन्यतरश्रुतेर्बाधो भवतीत्यर्थः यदीति तत्रैव मोक्षेपि विज्ञाने विशेषदर्शने सति कर्मैव श्रेष्ठं किं संन्यासाद्यायासेनेत्यर्थः ॥ ८२ ॥ तदभावे तु महान्दोषः सुषुप्तावि विगलितज्ञानस्यापि ज्ञानमस्तीत्युच्यते चेत् इतो दुःखतरं अयुक्ततरं न किंचिदित्यर्थः ॥ ८३ ॥ बुधानां मैत्रेयीप्रभृतीनामप्यत्र संमोहो दृश्यते तथाहि मैत्रेयी मुक्तौ द्वैतदर्शने कर्मफलसाम्यं द्वैतादर्शने मूढतमत्वं च पश्यंती अन्यतरस्य श्रेयस्त्वमप्रतिपद्यमाना याज्ञवल्क्यमवोचत् अत्रैव मा भगवानमूमुहदिति मामां ॥ ८४ ॥ ८५ ॥

अत्रसमाधानमाह इंद्रियाणीति देहिनांप्राणिनांस्वस्वेदेहेस्वस्वरूपेऽधिष्ठानेस्थितानिइंद्रियाण्येवमनःषष्ठानिबुध्यंतेविशेषतःपश्यंति यतस्तानिआत्मनोविशेषविज्ञानेकारणानिहेतुभूतानि कथं सूक्ष्मश्चिदात्मातैः कर्तृकारणरूपैःपश्यति बाह्यमाभ्यंतरंवाविषयंप्रकाशयति अयंभावः प्रत्यक्षंहिबाह्यमर्थंचक्षुषैवपश्यति तदभावेनपश्यति नचतावताआत्मनःप्रकाशनशक्तिर्हीयतेतेनविनापिस्वप्नेनद्दर्शनात् एवंसुप्तिसमाध्योर्मनसाविनापिनास्यात्मनोज्ञशक्तिवियोगः उपकरणस्यस्वातंत्र्याविघातकत्वात् तथाचकरणाभावकृतमेवास्यविशेषविज्ञानराहित्यं नत्वज्ञत्वकृतमितिकैवल्येपिनात्मनःसार्वज्ञ्यहानिः तथाचश्रुतिः यद्वैतन्नपश्यतिपश्यन्वैतन्नपश्यतियद्वैतंनशृणोत्यशृण्वन्वैतच्छृणोतीत्यादिकासुप्त्यादावप्यात्मनोद्रष्टृत्वादिकंदर्शयति ॥ ८६ ॥ आत्मनोज्ञशक्त्यवियोगंदर्शयितुमिंद्रियाणांजडत्वमाह आत्मनेति वस्तुतइंद्रियाणिस्वरूपेणैवनसंति अध्यस्तत्वात् परमनेस्थित्वानत्सत्त्वमुपेत्यापितानिकाष्ठवदचेतनान्येवातोविनश्यंति तत्रफेनदृष्टांतोयथायोग्यंयोजनीयः यथाफेनोजलेनविनास्वयंनिरात्मैवसात्मत्वेनदृष्टोपितेनविनान

इंद्रियाण्येवबुध्यंतेस्वदेहेदेहिनांनृप ॥ कारणान्यात्मनस्तानिसूक्ष्मःपश्यतितैस्तुसः ॥ ८६ ॥ आत्मनाविप्रहीणानिकाष्ठकुड्यसमानितु ॥ विनश्यंतिनसंदेहःफेनाइवमहार्णवे ॥ ८७ ॥ इंद्रियैःसहसुप्तस्यदेहिनःशत्रुतापन ॥ सूक्ष्मश्चरतिसर्वत्रनभसीवसमीरणः ॥ ८८ ॥ सपश्यतियथान्यायंस्पर्शान्स्पृशतिवाविभो ॥ बुध्यमानोयथापूर्वमखिलेनेहभारत ॥ ८९ ॥ इंद्रियाणीहसर्वाणिस्वेस्वेस्थानेयथाविधि ॥ अनीशत्वात्प्रलीयंतेसर्पाहतविषाइव ॥ ९० ॥ इंद्रियाणांतुसर्वेषांस्वस्थानेष्वेवसर्वशः ॥ आक्रम्यगतयःसूक्ष्माश्चरत्यात्मानसंशयः ॥ ९१ ॥ सत्वस्यचगुणान्कृत्स्नान्रजसश्चगुणान्पुनः ॥ गुणांश्चतमसःसर्वान्गुणान्बुद्धेश्चभारत ॥ ९२ ॥ गुणांश्चमनसश्चापिनभसश्चगुणांश्चसः ॥ गुणान्वायोश्चधर्मात्मन्स्नेहजांश्चगुणान्पुनः ॥ ९३ ॥

तिष्ठतीति ॥ ८७ ॥ इंद्रियाणांजडत्वमुक्त्वात्मनःस्वयंज्योतिष्ट्वमाह इंद्रियैरिति देहाभिमानिनःसेंद्रियस्यस्वप्नेप्रलीनस्यापियंःसूक्ष्मःअंतरात्मासर्वत्रविषयेचरति जाग्रतीवस्वप्नेपिसर्वंविषयंभासयतीत्यर्थः ॥ ८८ ॥ एतदेवाह सइति यथापूर्वंजाग्रद्वदित्यर्थः ॥ ८९ ॥ इंद्रियाणांसात्मत्वमात्मचैतन्यानुवेधादेवेत्यन्वयव्यतिरेकाभ्यामाह इंद्रियाणीति इहस्वप्नेअनीशत्वान्नास्तिईशःप्रवर्तकोयेषांतानितथात्वात् ॥ ९० ॥ व्यतिरेकमुक्त्वान्वयमाह इंद्रियाणांत्विति स्वस्थानेस्थितानांगतयःगतीः सर्वाइंद्रियवृत्तयश्चिद्भासा एवउद्यंतीत्यर्थः ॥ ९१ ॥ सर्वत्रचिद्भासंदर्शयति सत्वस्येति सत्वादीनांगुणान्व्याप्यआत्माचरतीति पूर्वेणान्वयः सत्वस्यगुणान्धर्मादीन् रजसःप्रवृत्त्यादीन् तमसःअप्रवृत्त्यादीन् बुद्धेरध्यवसायादीन् ॥ ९२ ॥ मनसःसंकल्पादीन् नभआदीनांश्रोत्रादीन् स्नेहजान्स्नेहोजलंजायतेतस्मात्तेजसस्तज्जान् ॥ ९३ ॥

सर्वाण्येवेति सर्वाणिउक्तान्यनुक्तानिचक्षेत्रज्ञेषुसन्निहितानिसत्वादीनिगुणैर्मायिकैश्चित्तसत्वानंदत्वाद्यैर्व्याप्यआत्माब्रह्मक्षेत्रज्ञंजीवंव्याप्तिव्यामोमि कर्मणीचतमेवक्षेत्रज्ञंव्यामुनइतिसंबंधः ॥१४॥ इंद्रियाणि मनःषष्ठानि एतच्चक्षेत्रज्ञस्यकर्मसंबंधेकारणमुपन्यस्तं ॥१५॥ मुक्तिकारणंचाह प्रकृतिमिति चादिंद्रियाणि इंद्रियाणिकार्योपाधिप्रकृतिंकारणोपाधिंचातीत्यक्षेत्रज्ञःअव्ययंवृद्धिन्हासशून्यंकूटस्थमात्मानंग च्छति तमेवविशिनष्टिपरमिति ॥ १६ ॥ तत्प्राप्तिफलमाह विमुक्तइति ॥ १७॥ ननुपरमात्मानंप्राप्तस्यानिवृत्तौपुनर्देहस्योत्थानंनस्यादित्याशंक्याह शिष्टमिति निवृत्तेपिकारणेचक्रभ्रमिन्यायेनशिष्टंमन आदिप्रतियोगिनोआगच्छंतिगच्छंति यथाकालंसमाधिव्युत्थानकालभेदेन गुरोःसंदेशकारिणः प्रारब्धकर्मानुसारिणीश्वरप्रेरणानांकर्तुशीलंयेषांते ॥ १८ ॥ एवंजीवन्मुक्तिसद्भावमुक्त्वाविदेहकैवल्यमाह

अपांगुणांस्तथापार्थपार्थिवांश्चगुणानपि ॥ सर्वाण्येवगुणैर्व्याप्यक्षेत्रज्ञेषुयुधिष्ठिर ॥ ९४ ॥ आत्माचव्याप्तिक्षेत्रज्ञंकर्मणीचशुभाशुभे ॥ शिष्याइवमहात्मानमिंद्रियाणिचतंप्रभो ॥ ९५ ॥ प्रकृतिंचाप्यतिक्रम्यगच्छत्यात्मानमव्ययं ॥ परंनारायणात्मानंनिर्द्वंद्वंप्रकृतेःपरं ॥ ९६ ॥ विमुक्तःपुण्यपापेभ्यःप्रविष्टस्तमनामयं ॥ परमात्मानमगुणंननिवर्ततिभारत ॥ ९७ ॥ शिष्टंतत्रमनस्तातइंद्रियाणिचभारत ॥ आगच्छंतियथाकालंगुरोःसंदेशकारिणः ॥ ९८ ॥ शक्यंचाल्पेन कालेनशांतिंप्राप्तुंगुणार्थिना ॥ एवमुक्तेनकौंतेययुक्तज्ञानेनमोक्षिणा ॥ ९९ ॥ सांख्याराजन्महाप्राज्ञागच्छंतिपरमांगतिं ॥ ज्ञानेनानेनकौंतेयतुल्यंज्ञानंनविद्यते ॥ १०० ॥ अत्रतेसंशयोमाभूज्ज्ञानंसांख्यंपरंमतं ॥ अक्षरंध्रुवमेवोक्तंपूर्णंब्रह्मसनातनं ॥ १०१ ॥ अनादिमध्यनिधनंनिर्द्वंद्वंकर्तृशाश्वतं ॥ कूटस्थंचैवनित्यंचयद्वदंतिमनीषिणः ॥ १०२ ॥ यतःसर्वाःप्रवर्तंतेसर्गप्रलयविक्रियाः ॥ यच्चशंसंतिशास्त्रेषुवदंतिपरमर्षयः ॥ १०३ ॥ सर्वेविप्राश्चदेवाश्चतथाशमविदो जनाः ॥ ब्रह्मण्यंपरमंदेवमनंतंपरमच्युतं ॥ १०४ ॥ प्रार्थयंतश्चतंविप्रावदंतिगुणबुद्धयः ॥ सम्यग्युक्तास्तथायोगाःसांख्याश्चामितदर्शनाः ॥ १०५ ॥

शक्यमिति अल्पेनवर्तमानदेहपातावधिनाशांतिंविदेहमुक्तिं ॥ ९९ ॥१००॥ परंयोगापेक्षयाश्रेष्ठं एवंसांख्येनयोगेनवाशोधितस्यत्वंपदार्थस्यब्रह्माद्वैतसिद्धयेतत्पदार्थाभेदंवक्तुंतत्पदार्थस्वरूपमाह अक्षरमि त्यादिना अक्षरंव्यापकं अश्नोतेःसरन् ध्रुवंअचंचलं अतएवपूर्णंब्रह्मसर्वोत्कृष्टं सनातनंसदैकरूपं ॥ १०१ ॥ निर्द्वंद्वंद्वैतवर्जितं कर्तृजगज्जन्मादिहेतुः शाश्वतंअखंडदंडायमानं कूटस्थंनिर्विकारं ॥१०२॥ ॥१०३॥ ब्रह्मण्यंब्रह्मजातिहितं ॥ १०४ ॥ प्रार्थयंतः गुणेषुविषयेषुबुद्धिर्येषांते तंवदंतिमायिकैर्गुणैःस्तुवंति सांख्यायोगाश्चस्तुवंति जगत्कर्तृत्वेनआदिगुरुत्वेनचेतिशेषः ॥ १०५॥

सांख्यज्ञानंशुद्धचिन्मात्रंतस्यस्वरूपमित्यर्थः तत्सत्त्वेमानमाह अभिज्ञानानीति घटादीनांज्ञानानितान्येवतस्यामूर्तेर्ब्रह्मणोमतंज्ञानं मनज्ञाने ऽस्माद्भावेनिष्ठा निर्विषयघटादिज्ञानमेवपरंब्रह्मेत्यर्थः यथोक्तंवार्तिके परागर्थप्रमेयेषुयाफलत्वेनसंमता संवित्सैवेहमेयार्थोवेदांतोक्तिप्रमाणतइति ॥१०६॥ यदुक्तंविधंब्रह्मनतत्सच्चिदानंदरूपंतत्रस्थावरेषुसदंशमात्राभिव्यक्तिः जंगमेषुसच्चिदंशयोर्विद्वत्सुसच्चिदानंदांशानांत्रयाणामप्यभिव्यक्तिरितितेषामुत्तरमुत्तरंश्रेष्ठमित्याहद्वाभ्यां द्विविधानीति अगमंस्थावरं ॥१०७॥ महत्सुब्रह्मवित्सु यन्महज्ज्ञानंतत्सांख्यागतंसांख्येंऽतर्गतं एतेनसांख्यविज्ञानात्सर्वविज्ञानमुक्तं तथाचस्थावराज्जं

अमूर्तेस्तस्यकौंतेयसांख्यंमूर्तिरितिश्रुतिः॥ अभिज्ञानानितस्याहुर्मतंहिभरतर्षभ॥ १०६॥ द्विविधानीहभूतानिपृथिव्यांपृथिवीपते ॥ जंगमागमसंज्ञानि जंगमंतुविशिष्यते॥ १०७॥ ज्ञानंमहद्यद्धिमहत्सुराजन्वेदेषुसांख्येषुतथैवयोगे ॥ यच्चापिदृष्टंविविधंपुराणेसांख्यागतंतन्निखिलंनरेंद्र ॥१०८॥ यच्चेतिहासेषुमहत्सुदृष्टंयच्चार्थशास्त्रेनृपशिष्टजुष्टे॥ ज्ञानंचलोकेयदिहास्तिकिंचित्सांख्यागतंतच्चमहन्महात्मन् ॥ १०९ ॥ शमश्चदृष्टःपरमंबलंचज्ञानंचसूक्ष्मंचयथावदुक्तं॥ तपांसिसूक्ष्माणिसुखानिचैवसांख्येयथावद्विहितानिराजन् ॥११०॥ विपर्ययेतस्यहिपार्थदेवान्गच्छंतिसांख्याःसततंसुखेन॥ तांश्चानुसंचार्यततःकृतार्थाःपतंतिविप्रेषुयतेषुभूयः ॥ १११ ॥ हित्वाचदेहंप्रविशंतिदेवंदिवौकसोद्यामिवपार्थसांख्याः ॥ अतोधिकंतेभिरतामहार्हेसांख्येद्विजाःपार्थिवशिष्टजुष्टे॥ ॥११२॥ तेषांनतिर्यग्गमनंहिदृष्टंनार्वाग्गतिःपापकृताधिवासः॥ नवाप्रधानाअपितेद्विजातयोयेज्ञानमेतन्नृपतेनुरक्ताः॥११३॥ सांख्यंविशालंपरमंपुराणंमहार्णवंविमलमुदारकांतं॥ कृत्स्नंचसांख्यंनृपतेमहात्मानारायणोधारयतेप्रमेयं ॥ ११४॥ एतन्मयोक्तंनरदेवतत्त्वंनारायणोविश्वमिदंपुराणं॥ ससर्गकालेचकरोतिसर्गंसंहारकालेचतदत्तिभूयः॥ ११५॥

गमंश्रेष्ठंजंगमेष्वपिविद्वान्श्रेष्ठतरइतिभावः ॥ १०८ ॥ १०९ ॥ शमादिकंसर्वंसांख्येसांख्यविज्ञाननिमित्तंविहितमित्यर्थः ॥ ११० ॥ विपर्ययेकिंचित्साधनवैकल्यात्ज्ञानानुत्पत्तौ यतेषुयत्नशीलेषु तांश्चानुसंचार्यतेषामाधिपत्यंकृत्वा ॥ १११ ॥ महार्हेअतिपूज्ये ऽधिकमभिरतास्तेदेवंतत्पदार्थंप्रविशंतिक्रमेणेतिशेषः ॥ ११२ ॥ कीदृशीगतिःयापापकृतानांअधिवासः एतत्परोक्षज्ञानफलमुक्तं ॥ ११३ ॥ अपरोक्षज्ञानफलमाह सांख्यमिति कृत्स्नंसांख्यंयोधारयते साक्षात्कृत्यास्तेसनारायणःपरंब्रह्मैव तथाचश्रुतिर्ब्रह्मविद्ब्रह्मैवभवतीति ॥ ११४ ॥ हेनरमयाएतत्देवस्यात्मनस्तत्त्वमुक्तं तच्चनारायणोविश्वमिति सर्वंखल्विदंब्रह्मेतिश्रुतेरित्यर्थः तत्रहेतुः सइति एतेनतज्जलानितिश्रुतेरर्थउक्तः ॥ ११५॥

सांख्यसर्वस्वमाहार्धेन संहृत्येति सर्वंकार्यजातंवियदादिकंसंहृत्यप्रविलाप्य कृत्वनिजदेहेकारणात्मनिसंस्थासमाप्तिर्यस्यसतथाकृत्वा स्वयमपिकारणीत्माप्सुनिर्विशेषचिन्मात्रेशेतेलीनोभवति जगदंतरात्मा नारायणःसर्वप्रत्यग्भूतः एतेनयोयंमायावी जगज्जन्मादिहेतुःसमर्वेषांप्रत्यग्भूतईश्वरश्चिन्मात्रेलीयनइतिनिर्विशेषब्रह्माद्वैतमुक्तंभवति ॥ ११६ ॥ इतिशांति० मोक्ष० नै० भा० एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥ ॥ ७ ॥ त्वंपदार्थशोधकौसांख्ययोगावुक्तातस्यपारमार्थिकंतत्पदार्थत्वंतत्त्ववंकुंअक्षरंध्रुवमेवोक्तमित्यादिनातेतत्पदार्थस्वरूपमुपक्षिप्तंतद्विवरणायारभने किन्तदक्षरमित्या

संहृत्यसर्वंनिजदेहसंस्थंकृत्वाप्सुशेतेजगदंतरात्मा ॥ ११६ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० सांख्यकथनेएकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥
युधिष्ठिरउवाच किंतदक्षरमित्युक्तंयस्मान्नावर्ततेपुनः ॥ किंचतत्क्षरमित्युक्तंयस्मादावर्ततेपुनः ॥ १ ॥ अक्षरक्षरयोर्व्यक्तिंपृच्छाम्यरिनिषूदन ॥ उपलब्धुं महाबाहोतत्त्वेनकुरुनंदन ॥ २ ॥ त्वंहिज्ञाननिधिर्विप्रैरुच्यसेवेदपारगैः ॥ ऋषिभिश्चमहाभागैर्यतिभिश्चमहात्मभिः ॥ ३ ॥ शेषमल्पंदिनानांतेदक्षिणायनभास्करे ॥ आवृत्तेभगवत्यर्केगंतासिपरमांगतिं ॥ ४ ॥ त्वयिप्रतिगतेश्रेयःकुतःश्रोष्यामहेवयं ॥ कुरुवंशप्रदीपस्त्वंज्ञानदीपेनदीप्यसे ॥ ५ ॥ तदेतच्छ्रोतुमिच्छामित्वत्तःकुरुकुलोद्वह ॥ नतृप्यामीहराजेंद्रशृण्वन्नमृतमीदृशं ॥ ६ ॥ भीष्मउवाच अत्रतेवर्तयिष्यामिइतिहासंपुरातनं ॥ वसिष्ठस्यचसंवादंकरालजनकस्यच ॥ ७ ॥ वसिष्ठंश्रेष्ठमासीनमृषीणांभास्करद्युतिं ॥ पप्रच्छजनकोराजाज्ञानंनैःश्रेयसंपरं ॥ ८ ॥ परमध्यात्मकुशलमध्यात्मगतिनिश्चयं ॥ मैत्रावरुणिमासीनमभिवाद्यकृतांजलिः ॥ ९ ॥ स्वक्षरंप्रश्रितंवाक्यंमधुरंचाप्यनुल्बणं ॥ पप्रच्छर्षिवरंराजाकरालजनकःपुरा ॥ १० ॥ भगवन्श्रोतुमिच्छामिपरंब्रह्मसनातनं ॥ यस्मान्नपुनरावृत्तिमाप्नुवंतिमनीषिणः ॥ ११ ॥ यच्चतत्क्षरमित्युक्तंयत्रेदंक्षरतेजगत् ॥ यच्चाक्षरमितिप्रोक्तंशिवंक्षेम्यमनामयम् ॥ १२ ॥

दि व्यक्तिविवेकंतत्त्वेनयाथात्म्येनउपलब्धुंपृच्छामीतिद्वयोःसंबंधः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ करालनामाजनकःकरालजनकस्तस्य ॥ ७ ॥ ८ ॥ कुशलंऊहापोहसमर्थं गतिरनुभवस्तेननिश्चयोस्यास्तीतितथा अध्यात्मेपरोक्षापरोक्षोभयविधज्ञानवंतमित्यर्थः मैत्रावरुणिंमित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसंदृष्ट्वावासतीवरेकुंभेरेतोपतत्ततोगस्त्यवसिष्ठवजायेतामितिबह्वृचानांह्यनुक्रमणिकायांतस्यमैत्रावरुणित्वमुक्तं ॥ ९ ॥ प्रश्रितंविनीतं मधुरंअर्थतः अनुल्बणंकुतर्कहीनं ॥ १० ॥ ११ ॥ यच्चेति यत्राक्षरेक्षरतेलवणोदकवल्लीयते एतेनक्षराक्षरशब्दप्रवृत्तिनिमित्तेदर्शिते शिवंआनंदरूपं क्षेम्यंसंसारमोचकं यतःअनामयंनिर्द्वंद्वं ॥ १२ ॥

यावत्कालेनकृत्स्नेनापिकालेन ॥ १३ ॥ कृत्स्नंक्षरंयावताकालेनक्षरतितत्प्रमाणमाह युगमिति युगंचतुर्युगंदेवमानेनअब्दानांद्वादशसहस्रसंमितं तदेवचतुर्युगंदशशतावृत्तंकल्पंतदेवचब्राह्ममहरुच्यते अत्रयो
यंमानुषःसंवत्सरःसदेवानामहोरात्रस्तयागणनयाद्वादशसहस्रंचतुर्युगं तेनएतत्षष्ट्यधिकशतत्रयेणगुणितंत्रिचत्वारिंशल्लक्षाणिविंशतिसहस्राणिच एतेषुदशधाभक्तेष्वेकोंशः चतुर्लक्षंद्वात्रिंशत्सहस्राणिचकले
र्मानं तदेवद्विगुणंद्वापरस्य त्रिगुणंत्रेतायाः चतुर्गुणंकृतस्य एतद्ब्रह्मदिनमानंगीतास्वप्युक्तं चतुर्युगसहस्रांतंब्रह्मणोदिनमुच्यते रात्रियुगसहस्रांतांतेहोरात्रविदोजनाइति ॥१४॥ यस्यांतेयस्येतितद्धितप्रकृतेर्ग्रहणं
ब्रह्मणोंतेइत्यर्थः प्रतिबुध्यतेशंभुरितिसंबंधः अपजंहिरण्यगर्भं हिरण्यगर्भःसमवर्ततापेभूतस्यजातःपतिरेकआसीत् सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेमेतिश्रुतेः ॥ १५ ॥ अणिमाद्यायत्रस्व

वसिष्ठउवाच श्रूयतांपृथिवीपालक्षरतीदंयथाजगत् ॥ यन्नक्षरतिपूर्वेणयावत्कालेनवाप्यथ ॥ १३ ॥ युगंद्वादशसाहस्रंकल्पंविद्धिचतुर्युगं ॥ दशकल्पश
तावृत्तमहस्तद्ब्राह्ममुच्यते ॥ १४ ॥ रात्रिश्चैतावतीराजन्यस्यांतेप्रतिबुध्यते ॥ सृजत्यनंतकर्माणंमहांतंभूतमग्रजं ॥ १५ ॥ मूर्तिमंतममूर्तात्माविश्वंशंभुःस्वयं
भुवः ॥ अणिमालघिमाप्राप्तिरीशानंज्योतिरव्ययं ॥ १६ ॥ सर्वतःपाणिपादंतत्सर्वतोक्षिशिरोमुखं ॥ सर्वतःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति ॥ १७ ॥ हिरण्य
गर्भोभगवानेषबुद्धिरितिस्मृतः ॥ महानितिचयोगेषुविरिंचिरितिचाप्यजः ॥ १८ ॥ सांख्येचपठ्यतेशास्त्रेनामभिर्बहुधात्मकः ॥ विचित्ररूपोविश्वात्माएकाक्ष
रइतिस्मृतः ॥ १९ ॥ वृतंनैकात्मकंयेनकृतंत्रैलोक्यमात्मना ॥ तथैवबहुरूपत्वाद्विश्वरूपइतिस्मृतः ॥ २० ॥ एषवैविक्रियापन्नःसृजत्यात्मानमात्मना ॥ अहंकारं
महातेजाःप्रजापतिमहंकृतं ॥ २१ ॥ अव्यक्ताद्व्यक्तमापन्नंविद्यासर्गंवदंतितं ॥ महांतंचाप्यहंकारमविद्यासर्गमेवच ॥ २२ ॥

यंभुवःनित्यंस्वतःसिद्धाः नतुहिरण्यगर्भादिष्विवतपसाआविर्भूताः ततईशानंसर्वनियंतृज्योतिश्चिद्रूपंअव्ययंअपरिणामि ॥ १६ ॥ अमूर्तमेवाक्षरस्यज्ञेयंरूपमाह सर्वतइति ॥ १७ ॥ हिरण्यगर्भइतियोः
क्षरइतिस्मृतःसएषहिरण्यगर्भःसूत्रात्माभगवान्सर्वैश्वर्यसंपन्नः बुद्धिःसमष्टिबुद्धिरितिवेदांतिनः योगेतुएषएवमहानितिप्रथमंकार्यं ॥ १८ ॥ १९ ॥ नैकात्मकंबहुरूपंत्रैलोक्यंकृतंवृतंच तदेवविश्वरूपोविरा
ट् विश्वंरूपमस्य तथाचश्रुतिः अग्निर्मूर्धाचक्षुषीचंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाः वायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतांतरात्मेति ॥ २० ॥ एषसूत्रात्मा अहंकारमुपाधि अहंकृतंतदभि
मानिनंविराजं ॥ २१ ॥ अस्यद्वैविध्यमाह अव्यक्तादिति महांतंसमष्टिं चात्व्यष्ट्यहंकारमविद्यासर्गं ॥ २२ ॥

विद्याविद्ययोर्लक्षणमाह अविधिरिति अत्र अक्षरात्कारणात् हिरण्यगर्भसृष्टिः प्रथमा विराट्सृष्टिर्द्वितीया एकतः एतेषां त्रयाणामन्यतमे एकस्मिन्विषये यो विधिः आम्नोनेरादिमत्वात् आम्नोनिहवाइदंसर्वमादि. मांश्चभवतियएवंवेदेति तत्तदुपास्तिविधानं सा विद्या यो विधिस्तत्त्वमस्यहंब्रह्मास्मिअयमात्माब्रह्मेति सिद्धवस्तुकथनं सा विद्या अयमर्थः यथा रज्जुं सर्पत्वेन पश्यं भीतं नरं प्रतिकश्चिद्रज्जुरियं न सर्प इति सिद्धवद्रज्जु भावमुपदिशति तेन च साक्षात्कृतेन सद्यो भयनिवृत्तिर्जायते सोयमविधिर्विद्या अतिविक्षेपादामवाक्ये श्रद्धाहीनं प्रति इमं सर्पं रज्जुत्वेन भावयन्स्तव रज्जुरेव भविष्यति सच कर्मश्रद्धाजडो विधौ विश्वस्य भावनाबले न तस्य रज्जुत्वं पश्यति सर्पदष्टइवगरुडभावनेनात्मनो निर्विषत्वं तद्वत्सोयं विधिरविद्येति तद्वदत्रापि ध्येयं ॥ २३ ॥ उपहितयोर्महदहंकारयोः सूत्रविराडपरपर्याययोः सृष्टिमुक्त्वा तदुपाध्योः सृष्टिमाह भूतेति भू

अविधिश्च विधिश्चैव समुत्पन्नौ तथैकतः ॥ विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिंतकैः ॥ २३ ॥ भूतसर्गमहंकारात्तृतीयां विद्धि पार्थिव ॥ अहंकारेषु सर्वेषु चतुर्थं विद्धि वैकृतं ॥ २४ ॥ वायुर्ज्योतिरथाकाशमापोथ पृथिवी तथा ॥ शब्दः स्पर्शश्च रूपं च रसो गंधस्तथैव च ॥ २५ ॥ एवं युगपदुत्पन्नं दशवर्गमसंशयं ॥ पंचमं विद्धि राजेंद्र भौतिकं सर्गमर्थवत् ॥ २६ ॥ श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पंचमं ॥ वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ २७ ॥ बुद्धींद्रियाणि चैतानि तथा कर्मेंद्रियाणि च ॥ संभूतानीह युगपन्मनसा सह पार्थिव ॥ २८ ॥ एषा तत्त्वचतुर्विंशा सर्वाकृतिषु वर्तते ॥ यां ज्ञात्वा नाभिशोचंति ब्राह्मणास्तत्त्वदर्शिनः ॥ २९ ॥ एतद्देहं समाख्यानं त्रैलोक्ये सर्वदेहिषु ॥ वेदितव्यं नरश्रेष्ठ सदेवनरदानवे ॥ ३० ॥ सयक्षभूतगंधर्वे सकिन्नरमहोरगे ॥ सचारणपिशाचे वै सदेवर्षिनिशाचरे ॥ ३१ ॥ सदंशकीटमशके सपूतिकृमिमूषिके ॥ शुनि श्वपाके चैणेये सचांडाले सपुल्कसे ॥ ३२ ॥ हस्त्यश्वखरशार्दूले सवृक्षे गवि चैव ह ॥ यच्च मूर्तिमयं किंचित्सर्वत्रैतन्निदर्शनं ॥ ३३ ॥ जले भुवि तथाकाशे नान्यत्रेति विनिश्चयः ॥ स्थानं देहवतामासीदित्येवमनुशुश्रुम ॥ ३४ ॥ कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञितं ॥ अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ॥ ३५ ॥

तानि पंचतन्मात्राख्यानि सूक्ष्मपंचभूतानि अपंचीकृतानि सर्वेषु सात्विकराजसतामसेषु वैकृतं विकृतमेव वैकृतं ॥ २४ ॥ तमेवाह वायुरिति तत्र वाय्वादीनि पंचीकृतानि स्थूलानि भूतानि शब्दादिसहितानि तामसाहंकाराच्चतुर्थः सर्गः ॥ २५ ॥ युगपदित्याकाशाद्वायुः वायोरग्निरित्यादिः श्रौतक्रमोऽनादरणीय इत्युक्तं दृष्टिसृष्ट्यभिप्रायेण भौतिकं स्थूलभूतजं ॥ २६ ॥ तमेवाह श्रोत्रमिति ॥ २७ ॥ अत्र तामसानि भूतानि सात्विकानि मनःश्रोत्रादीनि राजसानि वागादीनि जाड्यप्रकाशप्रवृत्तिधर्मत्वादेतेषामयं विभागो बोध्यः ॥ २८ ॥ एषा मूलप्रकृतिः चतुर्विंशा चतुर्विंशतितमी चतुर्विंशीत्यृजुः पाठः सर्वाकृतिषु सर्वासु विकृतिषु यां प्रकृतिं पुरुषात्पृथग्भूतां ज्ञात्वा ॥ २९ ॥ एतत् विकृत्यात्मकं देहं पिंडब्रह्मांडात्मकशरीरं क्लीबत्वमार्षं ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ जले तिनान्यत्रेति च पंचमहाभूतांतर्वर्त्येव देहवान् जीवस्तान्यतीतस्तु ब्रह्मैवेति भावः ॥ ३४ ॥ एतावतः एतावत्पर्यंतं अक्षरावधि यद्व्यक्तं तत् क्षरते भूतात्मा चतुर्विंशकः संघातः ॥ ३५ ॥

एतदिति प्रत्यगात्मानंत्वंपदार्थमभिनीयदर्शयति इदमिति पराग्भूतंजगत् जगच्छब्दार्थमाह जगदिति एतेनाव्यक्तस्यापिक्षरत्वमुक्तं ॥ ३६ ॥ अत्रयुक्तिमाह महानिति यतोमहान्सूक्ष्माबुद्धिःसापिनित्यंक्षर त्यतस्तत्कारणमव्यक्तमपिक्षरत्येवेत्यर्थः तथाचप्रयोगः महान्क्षरोपादानकः क्षरात्मत्वात्घटवदिति नचात्मधर्माणांदुःखादीनांक्षरत्वेपिक्षरोपादानकत्वंनास्तिआत्मनोनित्यत्वादितिवाच्यं दुःखादेरात्मधर्मत्वस्यै वासिद्धेः तदभ्युपगमेवावन्ह्यौष्ण्यवन्निवृत्त्यसंभवेनयावद्दुःखनिवृत्तिलक्षणस्यमोक्षस्यासिद्धेरित्यास्तांतावत् ॥ ३७ ॥ पंचविंशतिमः तकारलोपआर्षः विष्णुःशुद्धचिन्मात्रंसनिर्गुणत्वान्निस्तत्त्वः कथंतर्हि पंचविंशतितत्त्वेषुतस्यगणनेत्यतआह तत्त्वेति तत्त्वाधिष्ठानत्वादेवास्यतत्त्वसंज्ञानतुकार्यत्वात्कारणत्वाद्वाऽस्यतत्त्वांतर्गतत्वमस्ति एतेनब्रह्मणोजगदुपादानत्वमपितदुपादानाज्ञानाश्रयत्वादेवेतिव्याख्यातं अन्य थातस्यापिपूर्वोक्तानुमानेनक्षरत्वापत्तिः यथोक्तंसंप्रदायविद्भिः अस्यद्वैतेंद्रजालस्ययदुपादानकारणं अज्ञानंतदुपाश्रित्यब्रह्मकारणमुच्यतइति ॥ ३८ ॥ निस्तत्त्वत्वादेवाधिष्ठातृत्वमपिनास्तीत्याह यदिति

एतदक्षरमित्युक्तंक्षरतीदंयथाजगत् ॥ जगन्मोहात्मकंप्राहुरव्यक्ताद्व्यक्तसंज्ञकं ॥ ३६ ॥ महांश्चैवाग्रजोनित्यमेतत्क्षरनिदर्शनं ॥ कथितंतेमहाराजयन्मांत्वंप
रिपृच्छसि ॥ ३७ ॥ पंचविंशतिमोविष्णुर्निस्तत्त्वस्तत्त्वसंज्ञितः ॥ तत्त्वसंश्रयणादेतत्तत्त्वमाहुर्मनीषिणः ॥ ३८ ॥ यन्मर्त्यमसृजद्व्यक्तंतत्तन्मूर्त्यधितिष्ठति ॥ चतु
र्विंशतिमोव्यक्तोह्यमूर्तःपंचविंशकः ॥ ३९ ॥ सएवहृदिसर्वासुमूर्तिष्वातिष्ठतेत्मवान् ॥ केवलश्चेतनोनित्यःसर्वमूर्तिरमूर्तिमान् ॥ ४० ॥ सर्गप्रलयधर्मिण्यासस
र्गप्रलयात्मकः ॥ गोचरेवर्ततेनित्यंनिर्गुणंगुणसंज्ञितं ॥ ४१ ॥ एवमेषमहानात्मासर्गप्रलयकोविदः ॥ विकुर्वाणःप्रकृतिमानभिमन्यत्यबुद्धिमान् ॥ ४२ ॥
तमःसत्वरजोयुक्तस्तासुतास्विहयोनिषु ॥ लीयतेप्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ४३ ॥ सहवासविनाशित्वान्नान्योहमितिमन्यते ॥ योहंसोहमितित्युक्त्वा
गुणानेवानुवर्तते ॥ ४४ ॥

यत्यस्माद्धेतोः मर्त्यंक्षरणधर्मिप्रधानंकर्तृव्यक्तंकार्यमसृजत् तत्तस्माद्धेतोस्तन्मूर्तिमूर्तिमत्जगत्प्रधानेनैवप्रवर्त्यतइत्यर्थः कोसावधिष्ठातायश्चतुर्विंशतितमःअव्यक्तः ननुकथमचेतनस्याधिष्ठातृत्वं संहतत्वादे वेतिगृहाण हियतःपुरुषोऽमूर्तोऽसंहतःअतोनासावधिष्ठातेत्यर्थः ॥ ३९ ननुसंहतमप्यव्यक्तंकाष्ठलोष्टसमत्वान्नाधिष्ठातृभवेदतआह सएवेति चतुर्विंशतितमएवआतिष्ठतेऽधितिष्ठति यतःआत्मवान्चिच्छा यावान् संधिरार्षः केवलोऽनुपाधिरपिचेतनः सर्गप्रलयधर्मिण्याप्रकृत्यामूर्तिमान्भवतिस्वतस्तुअमूर्तिमानेव ॥ ४० ॥ तयैवंचनिर्गुणमगोचरमपिगोचरेवर्तते दर्पणेनेवमुखं यदाहुः नतावदयमेकांतेनाविष यः अस्मत्प्रत्ययविषयत्वादिति ॥ ४१ ॥ तत्पदार्थनिरूपणमुपसंहरति एवमिति त्वंपदार्थंनिरूपयति विकुर्वाणइति प्रकृतिमान्अविद्यावान् अबुद्धिमान्मूढःअभिमन्यतेअहमितिआत्मानंमन्यते ॥ ४२ ॥ लीयतेयोनिभिःसहतादात्म्यंप्राप्नोति ॥ ४३ ॥ तत्रहेतुमाह सहेति सहवासेनविनष्टुंअदर्शनंगंतुंशीलमस्यतस्यभावस्तत्त्वंतस्मात् नान्योहंसंघातादितिमन्यते योहंसोहंअमुष्यपुत्रोहंअमुकजातीयोहमिति गुणान्ब्राह्मण्यादीनेव ॥ ४४ ॥

तामसान्क्रोधादीन् राजसान्प्रवृत्त्यादीन् सात्विकान्प्रकाशादीन् ॥ ४५ ॥ शुक्केतिक्रमेणस्वच्छत्वाद्रंजकत्वान्मलिनत्वाच्चसत्वादीनिशुक्कलोहितकृष्णानि तान्येवजलतेजोऽन्नानि एतानित्रिदृश्यानि वाचारंभणंविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यमितिश्रुतेः प्राकृतानिप्रकृतिस्तेजोबन्नानितत्संबंधीनि ॥ ४६ ॥ तेजोबन्नोपाधिकेषुजीवेषुयेतामसाइतिव्याख्येयं ॥ ४७ ॥ ४८ ॥ एवमिति यद्वायोयंपंचविंशतितमस्तमेवअव्यक्तविषयंमायागोचरंसंतंक्षरंविनाशिनंविकारिणंवाजातोदेवदत्तोमृतोदेवदत्तःसुखीदुःखीपुण्यवान्पापीचेत्यज्ञानादाहुः कथंतर्हितदुपलब्धिरतआह ज्ञानादेवप्रवर्ततेप्रकाशते एतेनतत्

तमसातामसान्भावान्त्रिविधान्प्रतिपद्यते ॥ रजसाराजसांश्चैवसात्विकान्सत्वसंश्रयात् ॥ ४५ ॥ शुक्कलोहितकृष्णानिरूपाण्येतानित्रीणितु ॥ सर्वाण्येतानिरूपाणियानीहप्राकृतानिवै ॥ ४६ ॥ तामसानिरयंयांतिराजसामानुषानथ ॥ सात्विकादेवलोकायगच्छंतिसुखभागिनः ॥ ४७ ॥ निष्कैवल्येनपापेनतिर्यग्योनिमवाप्नुयात् ॥ पुण्यपापेनमानुष्यंपुण्येनैकेनदेवताः ॥ ४८ ॥ एवमव्यक्तविषयंक्षरमाहुर्मनीषिणः ॥ पंचविंशतिमोयोयंज्ञानादेवप्रवर्तते ॥ ४९ ॥ इति श्रीमहाभारतेशांति० मोक्ष० प० वसिष्ठकरालजनकसंवादेद्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥ ॥ ७ ॥ वसिष्ठउवाच एवमप्रतिबुद्धत्वादबुद्धमनुवर्तते ॥ देहाद्देहसहस्राणितथासमभिपद्यते ॥ १ ॥ तिर्यग्योनिसहस्रेषुकदाचिद्देवतास्वपि ॥ उपपद्यतिसंयोगाद्गुणैःसहगुणक्षयात् ॥ २ ॥ मानुषत्वाद्दिवंयातिदिवोमानुष्यमेवच ॥ मानुष्यान्निरयस्थानमानंत्यंप्रतिपद्यते ॥ ३ ॥ कोशकारोयथात्मानंकीटःसमवरुंधति ॥ सूत्रतंतुगुणैर्नित्यंतथायमगुणोगुणैः ॥ ४ ॥ द्वंद्वमेतिचनिर्द्वंद्वस्तासुतास्विहयोनिषु ॥ शीर्षरोगेक्षिरोगेचदंतशूलेगलग्रहे ॥ ५ ॥ जलोदरेतृपारोगेज्वरगंडेविषूचके ॥ श्वित्रकुष्ठेग्निदग्धेचसिध्मापस्मारयोरपि ॥ ६ ॥ यानिचान्यानिद्वंद्वानिप्राकृतानिशरीरिषु ॥ उत्पद्यंतेविचित्राणितान्येषोप्यभिमन्यते ॥ ७ ॥ तिर्यग्योनिसहस्रेषुकदाचिद्देवतास्वपि ॥ अभिमन्यत्यभीमानात्तथैवसुकृतान्यपि ॥ ८ ॥ शुक्कवासाश्चदुर्वासाःशायीनित्यमधस्तथा ॥ मंडूकशायीचतथावीरासनगतस्तथा ॥ ९ ॥

दार्थएवाज्ञानाज्जीवत्वमापन्नोज्ञानान्मुच्यतइतिवदतातत्त्वमसीत्यादिवाक्यार्थोजीवब्रह्माभेदःसाधितोभवति ॥ ४९ ॥ इतिशांति० मोक्ष० नै० भा० द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥ ॥ ७ ॥ प्रकृतिसंयोगात्पुरुषस्तामेवानुवर्ततइत्युक्तंतत्प्रपंचयत्यध्यायद्वयेन एवमप्रतिबुद्धत्वादित्यादिना अबुद्धंअबोधंअज्ञानं भावेनिष्ठानेननञ्समासः ॥ १ ॥ गुणक्षयात्गुणसामर्थ्यात् क्षिक्षयैश्वर्ययोरित्यैश्वर्यार्थस्य क्षिधातोरूपं एतच्चतामसानिरयंयांतीतिश्लोकेनप्रागेवोक्तं ॥ २ ॥ आनंत्यंअनंतं ॥ ३ ॥ ४ ॥ निर्द्वंद्वःसुखदुःखादिहीनः ॥ ५ ॥ सिध्माकासश्वासः ॥ ६ ॥ एषजीवोभिमन्यतेअहमेवदुःखीरोगीचेति ॥ ७ ॥ ८ ॥ मंडूकवत्पाणिपादंसंकोच्यन्युब्जःशेतेइतिमंडूकशायी ॥ ९ ॥

आकाशेनिरावरणेदेशे ॥ १० ॥ ११ ॥ फलगृध्याफलाशा मुंजमेखलेतिकौपीनवस्त्वंलक्ष्यते ॥ १२ ॥ वालेत्याविककंवलोलक्ष्यते ॥ १३ ॥ फलकंभूर्जत्वगादिचिपिटकाहंवाकौपीनरूपं कंटकवस्त्रं शाल्मल्यादितूलजं कटकेतिपाठेतृणमयःकटः कीटकावसनःपट्टसूत्रजवस्त्रः ॥ १४ ॥ १५ ॥ १६ ॥ दशाहारोदशाहाहारः एकोहाकारोलुप्तः दशाहेनाहारोयस्येत्यर्थः ॥ १७ ॥ १८ ॥ आचामेन

चीरधारणमाकाशेशयनंस्थानमेवच ॥ इष्टकाप्रस्तरेचैवकंटकप्रस्तरेतथा ॥ १० ॥ भस्मप्रस्तरशायीचभूमिशय्यातलेपुंच ॥ वीरस्थानांबुपंकेचशयनंफल केपुच ॥ ११ ॥ विविधासुचशय्यासुफलगृध्यान्वितस्तथा ॥ मुंजमेखलनग्नत्वंक्षौमकृष्णाजिनानिच ॥ १२ ॥ शाणीवालपरीधानोव्याघ्रचर्मपरिच्छदः ॥ सिंहचर्मपरीधानःपट्टवासास्तथैवच ॥ १३ ॥ फलकपरिधानश्चतथाकंटकवस्त्रधृत् ॥ कीटकावसनश्चैवचीरवासास्तथैवच ॥ १४ ॥ वस्त्राणिचान्यानिबहून्यभिमन्यत्यबुद्धिमान् ॥ भोजनानिविचित्राणिरत्नानिविविधानिच ॥ १५ ॥ एकरात्रांतराशित्वमेककालिकभोजनं ॥ चतुर्थाष्टमकालश्चषष्ठकालिकएवच ॥ १६ ॥ षड्रात्रभोजनश्चैवतथैवाष्टाहभोजनः ॥ सप्तरात्रदशाहारोद्वादशाहिकभोजनः ॥ १७ ॥ मासोपवासीमूलाशीफलाहारस्तथैवच ॥ वायुभक्षोंबुपिण्याकदधिगोमयभोजनः ॥ १८ ॥ गोमूत्रभोजनश्चैवशाकपुष्पादएवच ॥ शैवालभोजनश्चैवतथाचामेनवर्तयन् ॥ १९ ॥ वर्तयन्शीर्णपर्णैश्चप्रकीर्णफलभोजनः ॥ विविधानिचकृच्छ्राणिसेवतेसिद्धिकांक्षया ॥ २० ॥ चांद्रायणानिविधिवल्लिंगानिविविधानिच ॥ चातुराश्रम्यपंथानमाश्रयत्यपथानपि ॥ २१ ॥ उपाश्रमानप्यपरान्पाषंडान्विविधानपि ॥ विविक्ताश्चशिलाच्छायास्तथाप्रस्रवणानिच ॥ २२ ॥ पुलिनानिविविक्तानिविविक्तानिवनानिच ॥ देवस्थानानिपुण्यानिविविक्तानिसरांसिच ॥ २३ ॥ विविक्ताश्चापिशैलानांगुहागृहनिभोपमाः ॥ विविक्तानिचजप्यानिव्रतानिविविधानिच ॥ २४ ॥ नियमान्विविधांश्चापिविविधानितपांसिच ॥ यज्ञांश्चविविधाकारान्विधींश्चविविधांस्तथा ॥ २५ ॥ वणिक्पथंद्विजक्षत्रवैश्यशूद्रांस्तथैवच ॥ दानंचविविधाकारंदीनांधकृपणादिषु ॥ २६ ॥ अभिमन्यत्यसंबोधात्तथैवत्रिविधान्गुणान् ॥ सत्वंरजस्तमश्चैवधर्मार्थौकामएवच ॥ २७ ॥ प्रकृत्यात्मानमेवात्माएवंप्रविभजत्युत ॥ स्वधाकारवषट्कारौस्वाहाकारनमस्क्रियाः ॥ २८ ॥ याजनाध्यापनंदानंतथैवाहुःप्रतिग्रहं ॥ यजनाध्ययनेचैवयच्चान्यदपिकिंचन ॥ २९ ॥

भक्तमंडेन मासराचामनिस्रावामंडेभक्तसमुद्भवेइत्यमरः ॥ १९ ॥ २० ॥ २१ ॥ उपाश्रमान्पाशुपतपांचरात्राद्युक्तदीक्षायोगान् ॥ २२ ॥ २३ ॥ गृहेषुयेनिभाःनितरांभांतिते दिव्यगृहोपमाइत्यर्थः ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥ प्रकृत्याउपकरणभूतया ॥ २८ ॥ २९ ॥

*वनं

विशसनेसंग्रामे ॥ ३० ॥ भवंसृष्टिं अभ्येत्यप्रसित्वा ॥ ३१ ॥ ३२ ॥ आत्मरूपगुणान् आत्मनिकल्पितान् रूपंवयोवर्णाकृत्यादि गुणान्सत्वादीन् ॥३३॥ क्रियापथेकर्ममार्गे क्रियांतथातदितिमन्यते इदंकर्मएवंगुणंएवंफलमित्यावश्यकत्वेनमानयति ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥४०॥४१॥ निरात्मानिःस्वरूपःचिदाभासविशिष्टोदेहेंद्रियादिसंघतः दृश्यत्वेनशुक्तिरजतादिवन्मिथ्यात्वात् आत्मगुणैःचेतनत्वसत्यत्वसुखत्वैः यथोक्तं आनंदोविषयानुभवोनित्यत्वंचेतिसतिधर्माः अपृथक्त्वेपिचतेषां चैतन्यात्पृथगिवावभासंनइति ॥ ४२ ॥ ४३ ॥ ४४ ॥ प्रकृतिरिति यद्यपिस्त्रीपुंसाभ्यामपत्य

जन्ममृत्युविवादेचतथाविशसनेपिच ॥ शुभाशुभमयंसर्वमेतदाहुःक्रियापथं ॥ ३० ॥ प्रकृतिःकुरुतेदेवीभवंप्रलयमेवच ॥ दिवसांतेगुणानेतानभ्येत्यैकोवतिष्ठते ॥ ३१ ॥ रश्मिजालमिवादित्यस्तत्तत्कालेनियच्छति ॥ एवमेषोसकृत्पूर्वंक्रीडार्थमभिमन्यते ॥ ३२ ॥ आत्मरूपगुणानेतान्विविधान्हृदयप्रियान् ॥ एवमेतांविकुर्वाणःसर्गप्रलयधर्मिणीं ॥ ३३ ॥ क्रियांक्रियापथेरक्तस्त्रिगुणांत्रिगुणाधिपः ॥ क्रियांक्रियापथोपेतस्तथातदितिमन्यते ॥ ३४ ॥ प्रकृत्यासर्वमेवेदंजगदंधीकृतंविभो ॥ रजसातमसाचैवव्याप्तंसर्वमनेकधा ॥ ३५ ॥ एवंद्वंद्वान्यथैतानिसमावर्ततिनित्यशः ॥ ममैवैतानिजायंतेधावंतेतानिमामिति ॥ ३६ ॥ निस्तर्तव्यान्यथैतानिसर्वाणीतिनराधिप ॥ मन्यतेयंत्वबुद्धत्वात्तथैवसुकृतान्यपि ॥ ३७ ॥ भोक्तव्यानिमयैतानिदेवलोकगतेनवै ॥ इहैवचैनंभोक्ष्यामिशुभाशुभफलोदयं ॥ ३८ ॥ सुखमेवतुकर्तव्यंसकृत्कृत्वासुखंमम ॥ यावदंतंचमेसौख्यंजात्यांजात्यांभविष्यति ॥ ३९ ॥ भविष्यतिचमेदुःखंकृतेनेहाप्यनंतकं ॥ महद्दुःखंहिमानुष्यंनिरयेचापिमज्जनं ॥ ४० ॥ निरयाच्चापिमानुष्यंकालेनैष्याम्यहंपुनः ॥ मनुष्यत्वाच्चदेवत्वंदेवत्वात्पौरुषंपुनः ॥ ४१ ॥ मनुष्यत्वाच्चनिरयंपर्यायेणोपगच्छति ॥ यएवंवेत्तिनित्यंवैनिरात्मात्मगुणैर्वृतः ॥ ४२ ॥ तेनदेवमनुष्येषुनिरयेचोपपद्यते ॥ ममत्वेनावृतोनित्यंतत्रैवपरिवर्तते ॥ ४३ ॥ सर्गकोटिसहस्राणिमरणांतासुमूर्तिषु ॥ यएवंकुरुतेकर्मशुभाशुभफलात्मकं ॥ ४४ ॥ सएवंफलमाप्नोतित्रिषुलोकेषुमूर्तिमान् ॥ प्रकृतिःकुरुतेकर्मशुभाशुभफलात्मकं ॥ प्रकृतिश्चतदश्नातित्रिषुलोकेषुकामगा ॥ ४५ ॥ तिर्यग्योनिमनुष्यत्वेदेवलोकेतथैवच ॥ त्रीणिस्थानानिचैतानिजानीयात्प्राकृतानिह ॥ ४६ ॥ अलिंगांप्रकृतिंत्वाहुर्लिंगैरनुमिमीमहे ॥ तथैवपौरुषंलिंगमनुमानाद्धिमन्यते ॥ ४७ ॥ सलिंगांतरमासाद्यप्राकृतंलिंगमव्रणं ॥ व्रणद्वाराण्यधिष्ठायकर्मणात्मनिमन्यते ॥ ४८ ॥

मिवपुंप्रकृतिभ्यामेवसर्वंकार्यंक्रियतेनान्यतरेणतथापिविवक्षितविवेकेप्रकृतावेवकर्तृत्वंपर्यवस्यति तस्याःसविकारत्वान्नतुपुंसिनिर्विकारत्वादित्यर्थः ॥ ४५ ॥ ४६ ॥ अलिंगांनित्यानुमेयां नतुवन्हिवत्कदाचित्प्रत्यक्षां कथंतर्हिसामन्यते दृष्टैर्लिंगैर्महदादिकार्यैस्तत्कारणभूतांतांअनुमिमीमहे पौरुषंलिंगंपुरुषस्यानुमापकंदेहाद्यनुगतंचैतन्यं चिदाभासलिंगेनचितिरनुमीयतेइत्यर्थः इतिमन्यतेनिरीश्वरःसांख्यो ननुतत्तथेतिभावः यत्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरइतिचितोऽव्यवहितापरोक्षत्वश्रुतिविरोधात् ॥ ४७ ॥ सइति अव्रणंप्राकृतंलिंगंनिर्विकारंप्रकृतेरिदंलिंगंगमकंदृश्यायाःप्रकृतेःसाधकइत्यर्थः सलिंगांतरंपुर्यष्टकंगर्भंप्राप्यक्षरणधर्मित्वाद्व्रणोलिंगंतस्यद्वाराणिश्रोत्रादीनि ॥ ४८ ॥

॥ ४९ ॥ निर्व्रणोपिव्रणवानस्मीतिमन्यते ॥ ५० ॥ अलिंगःलिंगादन्योपिलिंगंपुर्यष्टकं कालंमृत्युं मरणधर्मास्मीतिमन्यतेइत्यर्थः सत्वंबुद्धिअसत्वमवस्तुदेहादिकं आत्मनस्तत्वंअनारोपितंरूपं ॥ ५१ ॥
मृत्युंहंतारंचरंचरत्वं सर्गंपुत्रादिंआत्मसंबंधिनंमन्यते ॥ ५२ ॥ तपःतपस्विनं गतिउत्क्रांतिगत्यागतिं भवंभववंतंसंसारिणं ॥ ५३ ॥ अबुद्धिःविपर्यस्तबुद्धिः ॥ ५४ ॥ इतिशांति॰मोक्ष॰नै॰त्र्यधिकत्रि
शततमोऽध्यायः ॥ ३०३ ॥ ॥ ५ ॥ एवंपूर्वोक्तप्रकारेण ॥ १ ॥ धाम्नाषोडशकलःपुरुषइतिप्रकृत्यध्रुवैवास्यषोडशीकलेतिश्रुतिप्रसिद्धयोप्रकाशरूपयाचित्कलयाधामसहस्राणिस्था
नसहस्राणिप्राज्ञेनात्मनासंपरिष्वक्तउत्सर्जयातीतिब्रह्मालिंगितस्यैवगत्यादिश्रवणात् ॥ २ ॥ अत्रदृष्टांतमाह चंद्रमाइव ॥ ३ ॥ योनिःसाभासामूलप्रकृतिः दशेंद्रियाण्यंतःकरणचतुष्टयंचापंक्ष्यसापंचदशी

श्रोत्रादीनितुसर्वाणिपंचकर्मेंद्रियाण्यथ ॥ वागादीनिप्रवर्तंतेगुणेष्विहगुणैःसह ॥ ४९ ॥ अहमेतानिवैसर्वंमय्येतानींद्रियाणिह ॥ निरिंद्रियोहिमन्ये
तव्रणवानस्मिनिर्व्रणः ॥ ५० ॥ अलिंगोलिंगमात्मानमकालःकालमात्मनः ॥ असत्वंसत्वमात्मानमतत्त्वंतत्त्वमात्मनः ॥ ५१ ॥ अमृत्युर्मृत्युमात्मानमचरश्च
रमात्मनः ॥ अक्षेत्रःक्षेत्रमात्मानमसर्गःसर्गमात्मनः ॥ ५२ ॥ अतपास्तपआत्मानमगतिर्गतिमात्मनः ॥ अभवोभवमात्मानमभयोभयमात्मनः ॥ ५३ ॥ अ
क्षरःक्षरमात्मानमबुद्धिस्त्वभिमन्यते ॥ ५४ ॥ इतिश्रीमहाभारतेशांति॰मोक्ष॰वसिष्ठकरालजनकसंवादेत्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥ ॥ ५ ॥
वसिष्ठउवाच एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ सर्गकोटिसहस्राणिपतनांतानिगच्छति ॥ १ ॥ धाम्नाधामसहस्राणिमरणांतानिगच्छति ॥ तिर्यग्यो
निमनुष्यत्वेदेवलोकेतथैवच ॥ २ ॥ चंद्रमाइवभूतानांपुनस्तत्रसहस्रशः ॥ लीयतेप्रतिबुद्धत्वादेवमेषह्यबुद्धिमान् ॥ ३ ॥ कलापंचदशीयोनिस्तद्धामप्रतिबुध्य
ते ॥ नित्यमेतद्विजानीहिसोमंवैषोडशींकलां ॥ ४ ॥ कलायांजायतेऽजस्रंपुनःपुनरबुद्धिमान् ॥ धामतस्योपयुंजंतिभूयएवोपजायते ॥ ५ ॥ षोडशीतुकलासूक्ष्मा
ससोमउपधार्यतां ॥ नतूपयुज्यतेदेवैर्देवानुपयुनक्तिसा ॥ ६ ॥

सोमंअमृतंचिदात्मानं नित्यमेतद्धामेतिसंबंधः ॥ ४ ॥ कलायांयोनिभूतायांपंचदश्यामविद्यायांनिमित्तभूतायांसत्यांअबुद्धिमान्मूढःविपर्यस्तमतिःजायतेजन्मलभते तस्यजायमानस्यपुरुषस्यधामषोड
शीकलातांआनंदरूपांउपयुंजंतिभूतानीतिशेषः एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः उपजायतेएकवचनमार्षं युंजंतीतिप्रथमंसुप्तिचिदानंदलेशंविषयसंपर्कजमुपजीव्यभूतानिसंसरंतीत्य
र्थः ॥ ५ ॥ चित्कलातुनैवसंसरतीत्याह षोडशीति देवैरिंद्रियैर्नउपयुज्यतेपाल्यते किंतुदेवानेवसत्तास्फूर्तिप्रदानेनउपयुनक्तिपालयति ॥ ६ ॥

एतांषोडशींअक्षपयित्वाअविनाश्यजायतेइदंसर्वंरज्जुभिवसर्पः ननुपिंडमिवघटउपमृद्यजायतेतद्वत् अक्षपणेहेतुमाह साह्मीति यत्रकार्यंउत्पद्यतेयत्रचलीयतेसाप्रकृतिरितिप्रसिद्धंलोके नहिपिंडेघटोलीयते
किंतुपिंडस्यप्रकृतिभूतायांमृद्येव नचकपालादिकार्यांतरोत्पादएवपूर्वकार्यप्रलयइतिवाच्यं निराश्रयायाःकार्यधारायाअनुपपत्तेः कुतः घटशरावोदंचनादिषुपिंडलोष्टपांसुपरमाणुषुव्यावृत्तेषुयन्मृदितिअनु
स्यूतव्यवहारालंबनंतत्कुसुमेभ्यःसूत्रमिवतेभ्यःपृथक्तदुदयलयस्थानंमंतव्यं अतःप्रकृतित्वात्षोडश्याःक्षपणंनयुज्यतइत्यर्थः अस्यकार्यस्य नन्वितएवदृष्टांतात्षोडश्याःकार्याकारत्वंदुस्त्यजमित्याशंक्याह
तत्क्षयादिति कार्यक्षयान्मुच्यतइत्यर्थः सत्यंमृदोपिविकारविशेषत्वात् कतिपयविकारेष्वनुवृत्तावपिनिर्विकारंरूपंनप्रत्यक्षंतथापिजलमेवतस्यानिर्विकारंरूपंएवंजलस्यतेजस्तेजसःसन्मात्रंयत्सर्वकार्येष्वनु
स्यूतंतस्यैवसत्यत्वंवक्तव्यं इतरस्यविकारस्यमिथ्यात्वंवाचारंभणंविकारोनामधेयमितिश्रुतेः सतोपिविकारत्वेऽनवस्थापत्तिःशून्याच्चजगदुत्पत्त्यसंभवस्यकथमसतःसज्जायेतेतिश्रुत्यैवाक्षिप्तत्वात् तस्मात्सर्ववि
कारक्षयेपिसन्मात्रंब्रह्मास्तीतितद्भावापत्तिर्मोक्षइतियुक्तमुक्तंतत्क्षयान्मोक्षउच्यतइति गौडास्तुएवंतांक्षपयित्वेतिपठंति तदापंचदशीपरएवायमृज्वर्थःश्लोकः ॥ ७ ॥ तदेवेति यद्धामशब्देनमोक्षशब्देनचोच्य

एतामक्षपयित्वाहिजायतेनृपसत्तम ॥ साह्यस्यप्रकृतिर्दृष्टातत्क्षयान्मोक्षउच्यते ॥ ७॥ तदेवषोडशकलंदेहमव्यक्तसंज्ञकं ॥ ममायमितिमन्वानस्तत्रैवपरिव
र्तते ॥ ८ ॥ पंचविंशोमहानात्मातस्यैवाप्रतिबोधनात् ॥ विमलस्यविशुद्धस्यशुद्धाशुद्धनिषेवणात् ॥ ९ ॥ अशुद्धएवशुद्धात्मातादृग्भवतिपार्थिव ॥ अबुद्धसेव
नाच्चापिबुद्धोप्यबुद्धतांव्रजेत् ॥ १० ॥ तथैवाप्रतिबुद्धोपिविज्ञेयोनृपसत्तम ॥ प्रकृतेस्त्रिगुणायास्तुसेवनात्त्रिगुणोभवेत् ॥ ११ ॥ इतिश्रीमहाभारतेशांति०
मोक्ष० वसिष्ठक० चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४॥ ॥ ६॥ जनकउवाच अक्षराक्षरयोरेषद्वयोःसंबंधइष्यते ॥ स्त्रीपुंसोर्वा
पिभगवन्संबंधस्तद्वदुच्यते ॥ १॥ ऋतेतुपुरुषंनेहस्त्रीगर्भंधारयत्युत ॥ ऋतेस्त्रियंनपुरुषोरूपंनिर्वर्तयेत्तथा ॥ २ ॥ अन्योन्यस्याभिसंबंधादन्योन्यगुणसंश्रयात् ॥
रूपंनिर्वर्तयत्येतदेवंसर्वासुयोनिषु ॥ ३ ॥

ते तदेवआनंदात्मकंवस्तुषोडशकलंचिदचित्संघातरूपंपिंडब्रह्मांडात्मकं तथाचश्रुतिः आनंदाद्ध्येवखल्विमानिभूतानिजायंते आनंदेनजातानिजीवंति आनंदंप्रयंत्यभिसंविशंतीति तत्रापिअव्यक्तसंज्ञकंपंचद
शीकलायापूर्वंयोनिशब्देनोक्तातत्कार्यत्वात्तदभिन्नंदेहंयोनरोममायमितिदेहेममतांकरोति तत्रैवपरिवर्तते देहेननमुच्यतइत्यर्थः ॥८॥ योमन्वानस्तमाह पंचविंशइति शुद्धाशुद्धनिषेवणात्क्रमेणशुद्धोऽशुद्ध
श्चभवतीतिशेषः ॥ ९ ॥ तादृक् असंगोह्ययंपुरुषइतिश्रुतेरसंगोपिशुद्धात्माअशुद्धएवभवति तत्रहेतुर्ममायमितिमन्वानइत्यनुवर्तते तादृगित्यनेनैववायंहेतुरनुकृष्यते,अबुद्धःअज्ञः ॥ १० ॥ अप्रतिबुद्धःप्रतीपो
बोधःप्रतिबोधस्तद्रहितोविपर्ययहीनः तथैवेत्यनेनतादृशजनसेवनात्तादृशोभवतीत्युक्तं ॥ ११ ॥ इतिशांति० मोक्ष० नै० चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥ ॥ ६ ॥ ॥ ६ ॥
तत्क्षयान्मोक्षउच्यतेइतिप्रकृतिवियोगान्मोक्षउक्तस्तंप्रकृतेःपुरुषतुल्यत्वेननिवृत्तिर्नसंभवतीतिमन्वानआक्षिपति अक्षरक्षरयोरिति ॥ १ ॥ रूपंआकृतिं ॥ २ ॥ ३ ॥

असारंरज्जूरगवन्निःस्वरूपंभवति क्षरंप्रधानममृताक्षरंहरःक्षरात्मानावीशतेदेवएकइतिश्रुत्यनुसारेणअप्रतिबुद्धःक्षरः बुध्यमानःअक्षरः बुद्धईशः एतेयथाश्रुतिप्रोक्ताः ॥ २१ ॥ नानात्वेति यथोदुंबरेणसह
मशकस्ययथावाजलेनसहमत्स्यस्यनानात्वैकत्वेएवंचतुर्विंशत्यातत्त्वैःसहपंचविंशस्येत्यर्थः एतद्योगसंमतंनानात्वैकत्वमुक्तं ॥ २२ ॥ २३ ॥ अव्यक्तज्ञानसंहितंअव्यक्तविषयंपुरुषात्पृथक्त्वेनज्ञानंपुरुषमा

एषह्यप्रतिबुद्धश्चबुध्यमानश्चतेनघ ॥ २१ ॥ प्रोक्तोबुद्धश्चतत्त्वेनयथाश्रुतिनिदर्शनात् ॥ नानात्वैकत्वमेतावद्द्रष्टव्यं
चतुर्विंशमसारंचषड्विंशस्यप्रबोधनात् ॥ एषह्यप्रतिबुद्धश्चबुध्यमानश्चतेनघ ॥ २१ ॥ प्रोक्तोबुद्धश्चतत्त्वेनयथाश्रुतिनिदर्शनात् ॥ नानात्वैकत्वमेतावद्द्रष्टव्यं
शास्त्रदर्शनात् ॥ २२ ॥ मशकोदुंबरेयद्वदन्यत्वंतद्वदेतयोः ॥ मत्स्योदकेयथातद्वदन्यत्वमुपलभ्यते ॥ २३ ॥ एवमेवावगंतव्यंनानात्वैकत्वमेतयोः ॥ एतद्धिमोक्ष
इत्युक्तमव्यक्तज्ञानसंहितं ॥ २४ ॥ पंचविंशतिकस्यास्ययोयंदेहेप्रवर्तते ॥ एषमोक्षयितव्येतिप्राहुरव्यक्तगोचरात् ॥ २५ ॥ सोयमेवंविमुच्येतनान्यथेतिविनिश्च
यः ॥ परश्चपरधर्माचभवत्येषसमेत्यवै ॥ २६ ॥ विशुद्धधर्माशुद्धेनबुद्धेनचसबुद्धिमान् ॥ विमुक्तधर्मामुक्तेनसमेत्यपुरुषर्षभ ॥ २७ ॥ वियोगधर्मिणाचैववि
मुक्तात्माभवत्यथ ॥ विमोक्षिणाविमोक्षश्चसमेत्येहतथाभवेत् ॥ २८ ॥ शुचिकर्माशुचिश्चैवभवत्यमितदीप्तिमान् ॥ विमलात्माचभवतिसमेत्यविमलात्मना
॥ २९ ॥ केवलात्मातथाचैवकेवलेनसमेत्यवै ॥ स्वतंत्रश्चस्वतंत्रेणस्वतंत्रत्वमवाप्नुते ॥ ३० ॥ एतावदेतत्कथितंमयातेतथ्यंमहाराजयथार्थतत्त्वं ॥ अमत्सरत्वं
परिगृह्यचार्थंसनातनंब्रह्मविशुद्धमाद्यं ॥ ३१ ॥ नवेदनिष्ठस्यजनस्यराजन्प्रदेयमेतत्परमंत्वयाभवेत् ॥ विधित्समानायविबोधकारणंप्रबोधहेतोःप्रणतस्यशा
सनं ॥ ३२ ॥ नदेयमेतच्चतथानृतात्मनेशठायक्लीबायनजिह्मबुद्धये ॥ नपंडितज्ञानपरोपतापिनेदेयंतुदेयंचनिबोधयादृशे ॥ ३३ ॥ श्रद्धान्वितायाथगुणान्विता
यपरापवादाद्विरतायनित्यं ॥ विशुद्धयोगायबुधायनित्यंक्रियावतेचक्षमिणेहिताय ॥ ३४ ॥ विविक्तशीलायविधिप्रियायविवादहीनायबहुश्रुताय ॥ विजा
नतेचैवनचाहितक्षमेदमेचशक्तायशमेचदेयं ॥ ३५ ॥

त्रावशेषमेकत्वंमोक्षोऽन्यन्नानात्वमित्यर्थः ॥ २४ ॥ सांख्यमतमाह पंचविंशतिकस्येति अव्यक्तादज्ञानात्तद्विषयान्महदादेश्चमोक्षयितव्यः ॥ २५ ॥ एवमज्ञानबाधेसत्येवविमुच्येतनान्यथेत्यर्थः परोन्य
श्चिदात्मा परधर्माक्षेत्रधर्मा समेत्यक्षेत्रेणैकीभूय ॥ २६ ॥ परधर्मत्वमेवप्रपंचयति विशुद्धेत्यादिना ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ वेदनिष्ठस्यनिर्दोषवल्कर्मश्रद्धाजडस्य नावेदनिष्ठस्येतिपाठःस्व
स्थः विधित्समानायविशेषेणतृष्णावते घेदूपानेऽस्यरूपं ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७॥ ३८ ॥ अगाधमप्रतिष्ठितंजन्मयेनतत् जन्मनिवर्तकमित्यर्थः नास्तिमरणंयेनतत्अमरणं ॥ ३९ ॥ ४० ॥ ४१ ॥ किंतदक्षरमित्युक्तंयस्मान्नावर्ततेपुनरितिउपक्रांतमुपपाद्योपसंहरति ए

एतैर्गुणैर्हीनतमेनदेयमेतत्परंब्रह्मविशुद्धमाहुः ॥ नश्रेयसायोक्ष्यतितादृशेकृतंधर्मप्रवक्तारमपात्रदानात् ॥ ३६ ॥ पृथ्वीमिमांयद्यपिरत्नपूर्णांदद्यान्नदेयंत्विदं मव्रताय ॥ जितेंद्रियायैतदसंशयंतेभवेत्प्रदेयंपरमंनरेंद्र ॥ ३७ ॥ करालमातेभयमस्तुकिंचिदेतच्छ्रुतंब्रह्मपरंत्वयाद्य ॥ यथावदुक्तंपरमंपवित्रंविशोकमत्यंतम नादिमध्यं ॥ ३८ ॥ अगाधजन्मामरणंचराजन्निरामयंवीतभयंशिवंच ॥ समीक्ष्यमोहंत्यजवाद्यसर्वंज्ञानस्यतत्त्वार्थमिदंविदित्वा ॥ ३९ ॥ अवाप्तमेतद्धिम यासनातनाद्धिरण्यगर्भाद्गदतोनराधिप ॥ प्रसाद्ययत्नेनतमुग्रचेतसंसनातनंब्रह्मयथाद्यवैत्वया ॥ ४० ॥ पृष्टस्त्वयाचास्मियथानरेंद्रयथामयेदंत्वयिचोक्तम द्य ॥ तथावाप्तंब्रह्मणोमेनरेंद्रमहाज्ञानंमोक्षविदांपरायणं ॥ ४१ ॥ भीष्मउवाच एतदुक्तंपरंब्रह्मयस्मान्नावर्ततेपुनः ॥ पंचविंशोमहाराजपरमर्षिनिदर्श नात् ॥ ४२ ॥ पुनरावृत्तिमाप्नोतिपरंज्ञानमवाप्यच ॥ नावबुध्यतितत्त्वेनबुध्यमानोऽजरामरं ॥ ४३ ॥ एतन्निःश्रेयसकरंज्ञानंतेपरमंमया ॥ कथितंतत्त्वतस्तात श्रुत्वादेवर्षितोनृप ॥ ४४ ॥ हिरण्यगर्भादृषिणावसिष्ठेनमहात्मना ॥ वसिष्ठादृषिशार्दूलान्नारदोवाप्तवानिदं ॥ ४५ ॥ नारदाद्विदितंमह्यमेतद्ब्रह्मसनातनं ॥ मा शुचःकौरवेंद्रत्वंश्रुत्वैतत्परमंपदं ॥ ४६ ॥ येनक्षराक्षरेवित्तेभयंतस्यनविद्यते ॥ विद्यतेतुभयंतस्ययोनैतद्वेत्तिपार्थिव ॥ ४७ ॥ अविज्ञानाच्चमूढात्मापुनःपुनरुपा द्रवत् ॥ प्रेत्यजातिसहस्राणिमरणांतान्युपाश्नुते ॥ ४८ ॥ देवलोकंतथातिर्यङ्मनुष्यमपिचाश्नुते ॥ यदिशुध्यतिकालेनतस्मादज्ञानसागरात् ॥ ४९ ॥ अज्ञान सागरोघोरोह्यव्यक्तोगाधउच्यते ॥ अहन्यहनिमज्जंतियत्रभूतानिभारत ॥ ५० ॥ यस्मादगाधादव्यक्तादुत्तीर्णस्त्वंसनातनात् ॥ तस्मात्त्वंविरजाश्चैववितम स्कश्चपार्थिव ॥ ५१ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० वसिष्ठकरालजनकसंवादसमाप्तौअष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥ ॥ ७ ॥

तदुक्तमिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ वित्तेविज्ञाते ॥ ४७ ॥ उपाद्रवत्क्लेशवान्भूत् अश्नुतेचप्रेत्येत्युभयान्वयि ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ इतिशांति० मोक्ष० नै० भा० अष्टा धिकत्रिशततमोऽध्यायः ॥ ३०८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

असारंरज्जूरगवन्निःस्वरूपंभवति क्षरंप्रधानमस्मृताक्षरंहरःक्षरात्मानावीशतेदेवएकइतिश्रुत्यनुसारेणअप्रतिबुद्धःक्षरः बुध्यमानःअक्षरः बुद्धईशः एतेयथाश्रुतिप्रोक्ताः ॥ २१ ॥ नानात्वेति यथोदुंबरेणसह मशकस्ययथावाजलेनसहमत्स्यस्यनानात्वैकत्वेएवंचतुर्विंशत्यातत्त्वैःसह[illegible]स्येत्यर्थः एतद्योगसंमतंनानात्वैकत्वमुक्तं ॥ २२ ॥ २३ ॥ अव्यक्तज्ञानसंहितंअव्यक्तविषयंपुरुषात्पृथक्त्वेनज्ञानंपुरुषमा

॥२१२॥ चतुर्विंशमसारंचषड्विंशस्यप्रबोधनात् ॥ एषह्यप्रतिबु[illegible]ध्यमानश्चतेनघ ॥ २१ ॥ प्रोक्तोबुद्धश्चतत्त्वेनयथाश्रुतिनिदर्शनात् ॥ नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदर्शनात् ॥ २२ ॥ मशकोदुंबरेयद्वदन्यत्वंतद्वदेतयोः[illegible]त्स्योदकेयथातद्वदन्यत्वमुपलभ्यते ॥ २३ ॥ एवमेवावगंतव्यंनानात्वैकत्वमेतयोः ॥ एतद्धिमोक्ष इत्युक्तमव्यक्तज्ञानसंहितं ॥ २४ ॥ पंचविंशतिकस्यास्य[illegible]देहेपुवर्तते ॥ एषमोक्षयितव्येतिप्राहुरव्यक्तगोचरात् ॥ २५ ॥ सोयमेवंविमुच्येतनान्यथेतिविनिश्चयः ॥ परश्चपरधर्माचभवत्येपसमेत्यवै ॥ २६ ॥ विशुद्ध[illegible]शुद्धेनबुद्धेनचसबुद्धिमान् ॥ विमुक्तधर्मामुक्तेनसमेत्यपुरुषर्षभ ॥ २७ ॥ वियोगधर्मिणाचैवविमुक्तात्माभवत्यथ ॥ विमोक्षिणाविमोक्षश्चसमेत्येहतथाभवेत् ॥ २८ ॥ शुचिकर्माशुचिश्चैवभवत्यमितदीप्तिमान् ॥ विमलात्माचभवतिसमेत्यविमलात्मना ॥ २९ ॥ केवलात्मातथाचैवकेवलेनसमेत्यवै ॥ स्वतंत्रश्चस्वतंत्रेणस्वतंत्रत्वमवाप्नुते ॥ ३० ॥ एतावदेतत्कथितंमयाततथ्यंमहाराजयथार्थतत्त्वं ॥ अमत्सरत्वं परिगृह्यचार्थंसनातनंब्रह्मविशुद्धमाद्यं ॥ ३१ ॥ नवेदनिष्ठस्यजनस्यराजन्प्रदेयमेतत्परमंत्वयाभवेत् ॥ विधित्समानायविबोधकारणंप्रबोधहेतोःप्रणतस्यशासनं ॥ ३२ ॥ नदेयमेतच्चतथानृतात्मनेशठायक्लीबायनजिह्मबुद्धये ॥ नपंडितज्ञानपरोपतापिनेदेयंतुदेयंचनिबोधयादृशे ॥ ३३ ॥ श्रद्धान्वितायाथगुणान्विताय ॥ ३४ ॥ विविक्तशीलायविधिप्रियायविवादहीनायबहुश्रुताय ॥ विजायपरापवादाद्विरतायनित्यं ॥ विशुद्धयोगायबुधायनित्यंक्रियावतेचक्षमिणेहिताय ॥ ३४ ॥ विविक्तशीलायविधिप्रियायविवादहीनायबहुश्रुताय ॥ विजायपरापवादाद्विरतायनित्यं ॥ विशुद्धयोगायबुधायनित्यंक्रियावतेचक्षमिणेहिताय ॥ ३४ ॥ नतेचैवनचाहितक्षमेदमेचशक्तायशमेचदेयं ॥ ३५ ॥

त्रावशेषमेकत्वंमोक्षोऽन्यन्नानात्वमित्यर्थः ॥ २४ ॥ सांख्यमतमाह पंचविंशतिकस्येति अव्यक्तादज्ञानात्तद्विषयान्महदादेश्चमोक्षयितव्यः ॥ २५ ॥ एवमज्ञानबाधेसत्येवविमुच्येतनान्यथेत्यर्थः परोन्यश्चिदात्मा परधर्माक्षेत्रधर्मा समेत्यक्षेत्रेणैकीभूय ॥ २६ ॥ परधर्मत्वमेवप्रपंचयति विशुद्धेत्यादिना ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ वेदनिष्ठस्यनिर्दोषवत्कर्मश्रद्धाजडस्य नावेदनिष्ठस्येतिपाठःस्वच्छः विधित्समानायविशेषेणतृष्णावते धेदूपानेऽस्यरूपं ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ अगाधमप्रतिष्ठितंजन्मयेनतत् जन्मनिवर्त्तकमित्यर्थः नास्तिमरणंयेनतत्अमरणं ॥ ३९ ॥ ४० ॥ ४१ ॥ किंतदक्षरमित्युक्तंयस्मान्नावर्त्ततेपुनरितिउपक्रांतमुपपाद्योपसंहरति ए

एतैर्गुणैर्हीनतमेनदेयमेतत्परंब्रह्मविशुद्धमाहुः ॥ नश्रेयसायोऽस्यतिताद्दशेकृतंधर्मप्रवक्तारमपात्रदानात् ॥ ३६ ॥ पृथ्वीमिमांयद्यपिरत्नपूर्णांदद्यान्नदेयंत्विदंमव्रताय ॥ जितेंद्रियायैतदसंशयंतेभवेत्प्रदेयंपरमंनरेंद्र ॥ ३७ ॥ करालमातेभ मस्तुकिंचिदेतच्छ्रुतंब्रह्मपरंत्वयाद्य ॥ यथावदुक्तंपरमंपवित्रंविशोकमत्यंतमनादिमध्यं ॥ ३८ ॥ अगाधजन्मामरणंचराजन्निरामयंवीतभयंशिवंच ॥ समीक्ष्यमोहंत्यजवाद्यसर्वंज्ञानस्यतत्त्वार्थमिदंविदित्वा ॥ ३९ ॥ अवाप्तमेतद्धिमयासनातनाद्धिरण्यगर्भाद्गदतोनराधिप ॥ प्रसाद्ययत्नेनतमुग्रचेतसंसनातनंब्रह्मयथाद्यवैत्वया ॥ ४० ॥ पृष्टस्त्वयाचास्मियथानरेंद्रयथामयेदंत्वयिचोक्तमद्य ॥ तथावाप्तंब्रह्मणोमेनरेंद्रमहाज्ञानंमोक्षविदांपरायणं ॥ ४१ ॥ भीष्मउवाच एतदुक्तंपरंब्रह्मयस्मान्नावर्त्ततेपुनः ॥ पंचविंशोमहाराजपरमर्षिनिदर्शनात् ॥ ४२ ॥ पुनरावृत्तिमाप्नोतिपरंज्ञानमवाप्यच ॥ नावबुध्यतितत्त्वेनबुध्यमानोऽजरामरं ॥ ४३ ॥ एतन्निःश्रेयसकरंज्ञानंतपरमंमया ॥ कथितंतत्त्वतस्तातश्रुत्वादेवर्षितोनृप ॥ ४४ ॥ हिरण्यगर्भादृषिणावसिष्ठेनमहात्मना ॥ वसिष्ठादृषिशार्दूलान्नारदोवाप्तवानिदं ॥ ४५ ॥ नारदाद्विदितंमह्यमेतद्ब्रह्मसनातनं ॥ माशुचःकौरवेंद्रत्वंश्रुत्वैतत्परमंपदं ॥ ४६ ॥ येनक्षराक्षरेवित्तेभयंतस्यनविद्यते ॥ विद्यतेतुभयंतस्ययोनैतद्वेत्तिपार्थिव ॥ ४७ ॥ अविज्ञानाच्चमूढात्मापुनःपुनरुपाद्रवत् ॥ प्रेत्यजातिसहस्राणिमरणांतान्युपाश्नुते ॥ ४८ ॥ देवलोकंतथातिर्यङ्मनुष्यतयपिचाश्नुते ॥ यदिशुध्यतिकालेनतस्मादज्ञानसागरात् ॥ ४९ ॥ अज्ञानसागरोघोरोह्यव्यक्तोगाधउच्यते ॥ अहन्यहनिमज्जंतियत्रभूतानिभारत ॥ ५० ॥ पृथ्व्यस्मादगाधादव्यक्तादुत्तीर्णस्त्वंसनातनात् ॥ तस्मात्त्वंविरजाश्चैवविंतमस्कश्चपार्थिव ॥ ५१ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० वसिष्ठकरालजनवादसमाप्तौअष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥ ॥ ७ ॥

तदुक्तमिति ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ वित्तेविज्ञाते ॥ ४७ ॥ उपाद्रवत्क्लेशवानभूत् भयशून्यं कैप्यप्रवृत्य प्रेत्येत्युभयान्वयि ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ इतिशांति० मोक्ष० नै० भा० अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

किंतदक्षरमितिपृष्टस्याक्षरस्यव्याख्यानायचतुर्विंशत्यात्मकंक्षरमुक्त्वापंचविंशो ऽक्षरइतियोगमत् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ सोपिधर्माद्यभिभूतत्वात्क्षरएवेतिधर्माद्यस्पृष्टःषड्विंशोक्षरःसांख्यमतेनोपक्षिप्तः तंव्याचिख्यासुस्तदधिगमे ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ योनिकर्मविशुद्धःपात्रमित्युक्तंतत्रयोनिशुद्धिक
धिकारहेतून्कांश्चिद्धर्मान्विधत्ते मृगयांविचरन्नित्यध्यायेन

भीष्मउवाच मृगयांविचरन्कश्चिद्विजनेजनकात्मजः ॥ वनेददर्शविप्रेंद्रमृ(षिं)धरंभृगोः ॥ १ ॥ उपासीनमुपासीनःप्रणम्यशिरसामुनिं ॥ पश्चादनुमत
स्तेनपप्रच्छवसुमानिदं ॥ २ ॥ भगवन्किमिदंश्रेयःप्रेत्यचापीहवाभवेत् ॥ पुरुष(स्या)ध्रुवेदेहेकामस्यवशवर्तिनः ॥ ३ ॥ सत्कृत्यपरिपृष्टःसन्सुमहात्मामहातपाः ॥
निजगादततस्तस्मैश्रेयस्करमिदंवचः ॥ ४ ॥ ऋषिरुवाच मनसोप्रतिकूलानिप्रेत्यचेहचवांछसि ॥ भूतानांप्रतिकूलेभ्योनिवर्तस्वयतेंद्रियः ॥ ५ ॥ धे
र्मःसतांहितःपुंसांधर्मश्चैवाश्रयःसतां ॥ धर्माल्लोकास्त्रयस्तातप्रवृत्ताःसचराचराः ॥ ६ ॥ स्वादुकामुककामानांवैतृष्ण्यंकिंनगच्छसि ॥ मधुपश्यसिदुर्बुद्धेप्रपा
तंनानुपश्यसि ॥ ७ ॥ यथाज्ञानेपरिचयःकर्तव्यस्तत्फलार्थिना ॥ तथाधर्मेपरिचयः(क)र्तव्यस्तत्फलार्थिना ॥ ८ ॥ असताधर्मकामेनविशुद्धंकर्मदुष्करं ॥ सतातु
धर्मकामेनसुकरंकर्मदुष्करं ॥ ९ ॥ वनेग्राम्यसुखाचारोयथाग्राम्यस्तथैवसः ॥ ग्रामेवनसुखाचारोयथावनचरस्तथा ॥ १० ॥ मनोवाक्कायिकेधर्मेकुरुश्रद्धां
समाहितः ॥ निवृत्तौवाप्रवृत्तौवासंप्रधार्यगुणागुणान् ॥ ११ ॥ नित्यंचबहुदातव्यंसाधुभ्यश्चानसूयता ॥ प्रार्थितंव्रतशौचाभ्यांसत्कृतंदेशकालयोः ॥ १२ ॥
शुभेनविधिनालब्ध्वमर्हायप्रतिपादयेत् ॥ क्रोधमुत्सृज्यदद्याच्चनानुतप्येन्नकीर्तयेत् ॥ अनृशंसःशुचिर्दांतःसत्यवागार्जवेस्थितः ॥ योनिकर्मविशुद्धश्च
पात्रंस्याद्वेदविद्विजः ॥ १४ ॥ सत्कृताचैकपत्नीचजात्यायोनिरिहेष्यते ॥ ऋग्यजुः(सामगो)विद्वान्षट्कर्मापात्रमुच्यते ॥ १५ ॥ सएवधर्मःसोधर्मस्तंतंप्रतिनरंभ
वेत् ॥ पात्रकर्मविशेषेणदेशकालाववेक्ष्यच ॥ १६ ॥ लीलयाल्पंयथागात्रात्प्रमृज्यात्रजोपुमान् ॥ बहुयत्नेनचमहत्पापनिर्हरणंतथा ॥ १७ ॥ विरिक्तस्ययथा
सम्यग्घृतंभवतिभेषजं ॥ तथानिर्ह्रतदोपस्यप्रेत्यधर्मःसुखावहः ॥ १८ ॥ मानसं(सर्व)भूतेषुवर्ततेवैशुभाशुभं ॥ अशुभेभ्यःसदाक्षिप्यशुभेष्वेवावतारयेत् ॥ १९ ॥
सर्वंसर्वेणसर्वत्रक्रियमाणंचपूजयेत् ॥ स्वधर्मेयत्ररागस्तेकामंधर्मेविधीयतां ॥ २० ॥

र्मशुद्धिंचव्याचष्टे सत्कृतेति एकस्यैवपत्नीएकपत्नीनत्वन्यपूर्वा जात्याःपुत्रोत्पत्तेः योनिःस्थानं ॥ १५ ॥ १६ ॥ १७ ॥ विरिक्तस्येति विरेचनानंतरमेवयथाघृतपानंभेषजंएवंदानेननिर्ह्रतदोषस्यैवयागा
दिधर्मःसुखावहइत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ इतिशांति० मोक्ष० नै० भा० नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥ ॥ १ ॥ ॥ १ ॥ यथाकठवल्लीषुयेयंप्रेतेविचिकित्सामनुष्येअस्तीत्येकेनायमस्तीतिचैकेइत्यादिनाप्रश्नप्रतिवचनेनस्थूलदेहनाशेप्यात्मास्तित्वंप्रसाधितं तस्यैवपुनरन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् अन्यत्रभूताच्चभव्याच्चयत्तत्पश्यसितद्वदेत्यादिनाधर्माद्युपेतलिंगशरीरादन्यत्वंप्रश्नपूर्वकंसाधितंतद्वदिहापिसाधयति धर्माधर्मविमुक्तंयदित्यादिना धर्माधर्मौसुखदुःखे तद्धेतूजन्ममृत्यू तद्धेतूपुण्यपापेप्रवृत्तिरूपेतद्धेतुःसंशयशब्दितमवस्तुविषयंभ्रांत्यादिज्ञानंरागादिजनकंतैर्विमुक्तंयत्प्रत्य

अधृतात्मन्धृतौतिष्ठदुर्बुद्धेबुद्धिमान्भव ॥ अप्रशांतःप्रशाम्यत्वमप्राज्ञःप्राज्ञवच्चर ॥ २१ ॥ तेजसाशक्यतेप्राप्तुमुपायःसहचारिणा ॥ इहचप्रेत्यचश्रेयस्तस्यमूलंधृतिःपरा ॥ २२ ॥ राजर्षिरधृतिःस्वर्गात्पतितोहिमहाभिषः ॥ ययातिःक्षीणपुण्योपिधृत्याल्लोकानवाप्तवान् ॥ २३ ॥ तपस्विनांधर्मवतांविदुषांचोपसेवनात् ॥ प्राप्स्यसेविपुलांबुद्धिंतथाश्रेयोभिपत्स्यसे ॥ २४ ॥ भीष्मउवाच सतुस्वभावसंपन्नस्तच्छ्रुत्वामुनिभाषितं ॥ विनिवर्त्यमनःकामाद्धर्मेबुद्धिंचकारह ॥ ॥ २५ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० प० जनकानुशासनेनवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥ ॥ १ ॥ युधिष्ठिरउवाच धर्माधर्मविमुक्तंयद्विमुक्तंसर्वसंशयात् ॥ जन्ममृत्युविमुक्तंचविमुक्तंपुण्यपापयोः ॥ १ ॥ यच्छिवंनित्यमभयंनित्यमक्षरमव्ययं ॥ शुचिनित्यमनायासंतद्भवान्वक्तुमर्हति ॥ २ ॥ भीष्मउवाच अत्रतेवर्तयिष्यामिइतिहासंपुरातनं ॥ याज्ञवल्क्यस्यसंवादंजनकस्यचभारत ॥ ३ ॥ याज्ञवल्क्यमृषिश्रेष्ठंदैवरातिर्महायशाः ॥ पप्रच्छजनकोराजाप्रश्नंप्रश्नविदांवरं ॥ ४ ॥ जनकउवाच कतींद्रियाणिविप्रर्षेकतिप्रकृतयःस्मृताः ॥ किमव्यक्तंपरंब्रह्मतस्माच्चपरतस्तुकिं ॥ ५ ॥ प्रभवंचाप्ययंचैवकालसंख्यांतथैवच ॥ वक्तुमर्हसिविप्रेंद्रत्वदनुग्रहकांक्षिणः ॥ ६ ॥ अज्ञानात्परिपृच्छामित्वंहिज्ञानमयोनिधिः ॥ तदहंश्रोतुमिच्छामिसर्वमेतदसंशयं ॥ ७ ॥

गात्मवस्तु ॥ १ ॥ तदेवशिवंजाग्रदाद्यपेक्षयातुरीयं शिवमद्वैतंचतुर्थंमन्यंतइतिश्रुतेः नित्यमभयंसर्वदाभयशून्यं प्रलयादौकारणब्रह्मभावंप्राप्तस्यापिजन्मांतरसत्त्वात् नित्यंअविनाशिहिरण्यगर्भादिवन्नन्श्यतीत्यर्थः अक्षरंअपचयशून्यं अतएवाव्ययंनाशहीनं शुचिस्वतोनिर्दोषं नित्यमनायासंउपाधिसंपर्केप्यप्रच्युतकौटस्थ्यभावं ॥ २ ॥ यत्पृष्टंयच्चापृष्टमपिपृष्टप्रतिपत्त्यर्थत्वादावश्यकंतत्सर्वंआख्यायिकामुखेनवक्तुंप्रतिजानीते अत्रेति ॥ ३ ॥ ४ ॥ अव्यक्तंकारणंब्रह्म परंमहदादेःतस्माच्चपरतोनिर्गुणं ॥ ५ ॥ कांक्षिणःकांक्षिणेमह्यमितिशेषः ॥ ६ ॥ ७ ॥

यद्यप्येषामवांतरधर्मभेदोस्तितथाप्यव्यक्तादिधर्मिणःस
सांख्ययोगयोरैकार्थ्यस्यप्रागुक्तत्वादुभयसंमतमित्यर्थः अव्यक्तंयोगमतेजडंसत्यंच सांख्यमतेचित्प्रतिबिंबगर्भमीश्वराख्यंशुद्धब्रह्मज्ञानेनबाध्यंचेति एषाप्राचांव्याख्या शब्दादीनांभौतिकत्वोपपादकवा
वैषामप्रत्याख्येयाइतिभावः ॥ ८ ॥ ९ ॥ १० ॥ पृथिव्यादिपदैस्तन्मात्राण्युच्यंतेप्रकृतिशब्दितत्वात् ॥ ११ ॥ १२ ॥ शब्दादयःस्थूलवियदाद्याः मनस्तुविकारांतर्ग
क्यशेषविरोधात्तुयथाश्रुतमेवसाधु सर्वत्रलक्षणायांचसर्वशास्त्रविप्लवःस्यात् ॥ १३ ॥ एतेशब्दादयःदशविशेषाःविकारांतरानुपादानत्वंविशेषत्वंतच्चशब्दादिष्वेवदृष्टंनस्थूलपृथिव्यादिषु षोडशकमितिबुद्ध्यहंकाराभ्यांमनःपृथक्करो
तमपिनविशेषः तस्यवक्ष्यमाणरीत्यामहाभूतोपादानत्वात् श्रोत्रादीनामपिविशेषत्वंनिराचष्टे बुद्धीति सविशेषाणीत्यनेनश्रोत्रादयोनविशेषाइत्युक्तं ॥ १४ ॥

ननवाविदितंकिंचिन्मांतुजिज्ञासतेभवान् ॥ पृष्टे
याज्ञवल्क्यउवाच श्रूयतामवनीपालयदेतदनुपृच्छसि ॥ योगानांपरमंज्ञानंसांख्यानांचविशेषतः ॥८॥ अव्यक्तंचमहांतंचतथाहं
नचापिवक्तव्यमेषधर्मःसनातनः ॥ ९ ॥ अष्टौप्रकृतयःप्रोक्ताविकाराश्चापिषोडश ॥ तत्रतुप्रकृतीरष्टौप्राहुरध्यात्मचिंतकाः ॥ १० ॥ श
कारएवच ॥ पृथिवीवायुराकाशमापोज्योतिश्चपंचमं ॥ ११ ॥ एताःप्रकृतयस्त्वष्टौविकारानपिमेशृणु ॥ श्रोत्रंत्वक्चैवचक्षुश्चजिह्वाघ्राणंचपंचमं ॥ १२ ॥ शब्दः
ब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ वाक्हस्तौचपादौचपायुर्मेढ्रंतथैवच ॥ १३ ॥ एतेविशेषाराजेंद्रमहाभूतेषुपंचसु ॥ बुद्धींद्रियाण्यथैतानिसविशेषाणिमै
थिल ॥ १४ ॥ मनःषोडशकंप्राहुरध्यात्मगतिचिंतकाः ॥ त्वंचैवान्येचविद्वांसस्तत्त्वबुद्धिविशारदाः ॥ १५ ॥ अव्यक्ताच्चमहानात्मासमुत्पद्यतिपार्थिव ॥ प्रथ
मंसर्गमित्येतदाहुःप्राधानिकंबुधाः ॥ १६ ॥ महतश्चाप्यहंकारउत्पन्नोहिनराधिप ॥ द्वितीयंसर्गमित्याहुरेतद्बुद्ध्यात्मकंस्मृतं ॥ १७ ॥ अहंकाराच्चसंभूतंमनोभूत
गुणात्मकं ॥ तृतीयःसर्गइत्येषआहंकारिकउच्यते ॥ १८ ॥

शास्त्रतस्त्वेतुमनोबुद्धिरहंकारश्चित्तंकरणमांतरं संशयोनिश्चयोगर्वःस्म
ति एतच्चानुभवबलात्तवचतार्किकादीनांचसंमतमित्याह त्वंचेति तथाहि लौकिकाअहंकारमात्मानंबुद्धितद्गुणंमनोंतरिंद्रियंचेतिप्रतियंति स्मरणंविषयाअमीइतिसर्वेषामंतरिंद्रियत्वमेव ॥ १५ ॥ सृष्टिक्रममाह अव्यक्तादिति सुषुप्ताख्यंतमोऽज्ञानंयद्बीजंस्वप्नबोधयोरित्युक्तेरव्यक्तमिहसौषुप्तंतमःतस्मान्महानात्माअयमहंब्राह्मणोमुष्यपुत्रइतिविशे
षानालिंगितोस्मीत्येतावन्मात्रप्रत्ययविषयोबुद्धिसूक्ष्माख्योमहानुत्पद्यते ॥ १६ ॥ ततउक्तविशेषालिंगितोस्मीतिप्रत्ययविषयोहंकारः ॥ १७ ॥ ततःसंकल्पविकल्पात्मकंमनस्तच्चवियदादिभूततद्गुणशब्दा
कं ॥ १८ ॥

अतएवतस्मान्मनसोभूतोत्पत्तिरुच्यते अतोमानसत्वाद्भूतानांस्थूलसूक्ष्मतारूपोविभागोनास्तीतिविशेषेषुशब्दादयएवगणितानस्थूलपृथिव्यादयः तेषांशब्दादिहेतुत्वेनविकारांतरानुपादानत्वरूपविशेषत्वायो गात् एतच्चतार्किकादीनामपिसंमतंश्रुत्यनुगृहीतंच तथाहि तार्किकागुणिनःसकाशाद्गुणोत्पत्तिमिच्छंतआकाशादिभ्यएवशब्दाद्युत्पत्तिमिच्छंति श्रुतिश्च इंद्रियेभ्यःपराह्यर्थाअर्थेभ्यश्चपरंमनः मनसस्तुपराबु द्धिर्बुद्धेरात्मामहान्परः महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः पुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरितिविलोमक्रमेणइममेवानुक्रमंप्रदर्शयति परत्वंकारणत्वं अर्थाःखादयः ॥ १९ ॥ शब्दादीनांसर्गस्तुभौ तिकःपंचमः ॥ २० ॥ बहुचिंतात्मकंमानसमित्यर्थः एतेनशब्दादीनांश्रोत्राद्यजनकत्वमुक्तंतेनचतेषांविशेषत्वंदृढीकृतंभवति ॥ २१ ॥ श्रोत्रादिभ्योऽधस्तनोऽधःश्रोत्रःसचासाविंद्रियग्रामश्चवागा दिः सोपिश्रोत्रादिवच्चिंतात्मकएवेतिभावः ऐंद्रियकंइंद्रियसमुदायः ॥ २२ ॥ ऊर्ध्वस्रोतःप्रवाहोऽस्येतिप्राणऊर्ध्वस्रोताः तिर्यगित्यत्रापिस्रोतःपदानुषंगोद्रष्टव्यः तेननाभिमध्यस्थस्यसमानस्यसर्वांगव्यापि

मनसस्तुसमुद्भूतामहाभूतानराधिप॥ चतुर्थंसर्गमित्येतन्मानसंविद्धिमेमतं॥ १९ ॥ शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ पंचमंसर्गमित्याहुर्भौतिकंभूत चिंतकाः॥ २० ॥ श्रोत्रंत्वक्चक्षुश्चजिह्वाघ्राणंचपंचमं॥ सर्गंतुषष्ठमित्याहुर्बहुचिंतात्मकंस्मृतं॥ २१ ॥ अधःश्रोत्रेंद्रियग्राममुत्पद्यतिनराधिप ॥ सप्तमंस र्गमित्याहुरेतदैंद्रियकंस्मृतं॥ २२ ॥ ऊर्ध्वस्रोतस्तथातिर्यगुत्पद्यतिनराधिप॥ अष्टमंसर्गमित्याहुरेतदार्जवकंस्मृतं ॥ २३॥ तिर्यक्स्रोतस्त्वधःस्रोतउत्पद्यतिन राधिप॥ नवमंसर्गमित्याहुरेतदार्जवकंबुधाः॥ २४ ॥ एतानिनवसर्गाणितत्त्वानिचनराधिप॥ चतुर्विंशतिरुक्तानियथाश्रुतिनिदर्शनात् ॥ २५ ॥ अतऊर्ध्वं महाराजगुणस्यैतस्यतत्त्वतः ॥ महात्मभिरनुप्रोक्तांकालसंख्यांनिबोधमे ॥ २६॥ इतिश्रीमहाभारतेशांति० मोक्ष० याज्ञवल्क्यजनकसंवादेदशा धिकत्रिशततमोऽध्यायः॥ ३१०॥ ॥ ७॥ ॥ ७॥ याज्ञवल्क्यउवाच अव्यक्तस्यनरश्रेष्ठकालसंख्यांनिबोधमे ॥ पंच कल्पसहस्राणिद्विगुणान्यहरुच्यते॥ १ ॥

नोव्यानस्यसर्वसंधिगतस्योदानस्यचउपरिभागगतांशानांग्रहणं एतदार्जवकंएतस्यऐंद्रियकस्यआर्जवकंऋजुवृत्तिः विशेषानाक्रांतसामान्यवृत्तिरितियावत् यथोक्तंसांख्यसमत्यां सामान्यकरणवृत्तिःप्रा णाद्यावायवःपंचेति ॥ २३ ॥ तिर्यक्स्रोतःशब्देनतेषामेवसमानोदानव्यानानांदेहस्याधोभागगतांशग्रहणं अधःस्रोताअपानः शेषंप्राग्वत् ॥ २४ ॥ सर्गाणिक्लीबत्वमार्षं चतुर्विंशतिरव्यक्तमहदहंकारमनां सिचत्वारिपंचभूतानिपंचशब्दाद्याः पंचज्ञानेंद्रियाणिपंचकर्मेंद्रियाणि प्राणादिपंचकस्येंद्रियेष्वेवांतर्भावाच्चतुर्विंशतिरेवेत्यर्थः॥ २५ ॥ गुणस्यगुणसर्गस्य तत्त्वतःतत्तदुपासनयातत्तद्भावापत्तिप्राप्य लयव्लो पेपंचमी यावंतंयावंतंकालंतिष्ठतितत्तत्कालस्यसंख्यांनिबोधबुध्यस्व मेमत्तः ॥ २६ ॥ इतिशांति० मोक्ष० नै० भा० दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥ ॥ ७ ॥ मोक्षस्यानंत्यं वक्तुंकर्मोपास्तिफलस्यसर्वस्यसावधिकत्वमाह अव्यक्तस्येत्यादिना अव्यक्तस्यउपासनयाऽव्यक्तभावंगतस्य ॥ १ ॥

रात्रिरेतावतीति अनयैवसंख्ययाशतायुर्वैपुरुषइतिश्रुतेरस्यशतंवर्षाण्यायुरितिज्ञेयं एवमुत्तरत्र अस्यैश्वर्यमाह सृजतीति ओषधिअन्नंतत्कार्यंमनः अन्नमयंहिसोम्यमनइतिश्रुतेः असतोधिमनोऽसृज्यतेति
श्रुतेश्चासच्छब्दिताद्व्यक्तान्महत्तत्त्वापरनामकंसूक्ष्मंमनोऽसृजदित्यर्थः ॥ २ ॥ मनःप्रजापतिमसृजतेतिश्रुतेरर्थमाह ततइति मनोद्वाराऽव्यक्तमेवप्रजापतिमसृजदितिश्रुत्यर्थोदर्शितः एवमन्यास्वपिश्रुतिषुआ
काशादीनांवाय्वादिसृष्टत्वोक्तिर्व्याख्येया अंडंब्रह्मांडंवासनामयं सेनितच्छब्देनांडमुच्यते ॥३॥ महामुनिर्महान् संदधेअनुसंधानंकृतवान् अव्यक्तस्याव्याकृतस्ययेयंतदैक्षतबहुस्यांप्रजायेयेतिप्राणिकर्मानुरो
धेनसृष्ट्यब्रह्मांडालोचनात्मकस्यईक्षणस्यकर्त्रीचिदचिदात्मिकापारमेश्वरीशक्तिः सैवमहत्तत्त्वमितिप्रघट्टकार्थः ॥ ४ ॥ ५ ॥ ६ ॥ सृजतीति ऋषिर्महान् भूतंमहाभूतोपादानत्वात् ॥ ७ ॥ देहात्भौतिक

रात्रिरेतावतीचास्यप्रतिबुद्धोनराधिप ॥ सृजत्योषधिमेवाग्रेजीवनंसर्वदेहिनां ॥ २ ॥ ततोब्रह्माणमसृजद्धिरण्यांडसमुद्भवं ॥ सामूर्तिःसर्वभूतानामित्येवमनु
शुश्रुम ॥ ३ ॥ संवत्सरमुषित्वांडेनिष्क्रम्यचमहामुनिः ॥ संदधेसमहींकृत्स्नांदिवमूर्ध्वंप्रजापतिः ॥ ४ ॥ द्यावापृथिव्योरित्येषराजन्वेदेषुपठ्यते ॥ तयोःशकलयो
र्मध्यमाकाशमकरोत्प्रभुः ॥ ५ ॥ एतस्यापिचसंख्यानंवेदवेदांगपारगैः ॥ दशकल्पसहस्राणिपादोनान्यहरुच्यते ॥ ६ ॥ रात्रिमेतावतींचास्यप्राहुरध्यात्मचिंत
काः ॥ सृजत्यहंकारमृषिर्भूतंदिव्यात्मकंतथा ॥ ७ ॥ चतुरश्चापरान्पुत्रान्देहात्पूर्वंमहानृषिः ॥ तेवैपितॄणांपितरःश्रूयंतेराजसत्तम ॥ ८ ॥ देवाःपितॄणांचसुतादेवै
र्लोकाःसमावृताः ॥ चराचरानरश्रेष्ठइत्येवमनुशुश्रुम ॥ ९ ॥ परमेष्ठीत्वहंकारःसृजन्भूतानिपंचधा ॥ पृथिवीवायुराकाशमापोज्योतिश्चपंचमं ॥ १० ॥ एत
स्यापिनिशामाहुस्तृतीयमिहकुर्वतः ॥ पंचकल्पसहस्राणितावदेवाहरुच्यते ॥ ११ ॥ शब्दःस्पर्शश्चरूपंचरसोगंधस्तथैवच ॥ एतेविशेषाराजेंद्रमहाभूतेषुपंचसु
॥ १२ ॥ यैराविष्टानिभूतानिअहन्यहनिपार्थिव ॥ अन्योन्यंस्पृहयंत्येतेअन्योन्यस्यहितेरताः ॥ १३ ॥ अन्योन्यमतिवर्ततेअन्योन्यस्पर्धिनस्तथा ॥ तेवध्यमाना
स्त्वन्योन्यंगुणैर्हारिभिरव्ययैः ॥ १४ ॥ इहैवपरिवर्ततेतिर्यग्योनिप्रवेशिनः ॥ त्रीणिकल्पसहस्राणिएतेषामहरुच्यते ॥ १५ ॥ रात्रिरेतावतीचैवमनसश्चनराधि
प ॥ मनश्चरतिराजेंद्रचारितंसर्वमिंद्रियैः ॥ १६ ॥ नचेंद्रियाणिपश्यंतिमनएवानुपश्यति ॥ चक्षुःपश्यतिरूपाणिमनसातुनचक्षुषा ॥ १७ ॥

देहोत्पत्तेःपूर्वंचतुरोभौतिकान्व्यष्टिमनोबुद्ध्यहंकारचित्ताख्यान्पुत्रान्महानृषिरसृजत् तेचत्वारःपुत्राः पितॄणांमहाभूतानामपिपितरइतिमनआदयएवभूतानांकल्पकाइत्यर्थः ॥ ८ ॥ एवंदृष्टिसृष्टिमुक्त्वासृ
ष्टिदृष्टिमाह देवाइति देवाइंद्रियाणिअंतःकरणचतुष्टयसहिताः पितॄणांमहाभूतानांसुताः देवैर्भूतैः लोकाश्चतुर्दशभुवनानिचराचराश्चतदंतर्गताभूतैरेवावृताः ॥ ९ ॥ एतदेवविस्पष्टयति परमेष्ठीति चकारात्
भौतिकानिमनआदीनि ॥ १० ॥ अहंकारोपासकस्यापिकालमानमाहैतस्येति तृतीयंआहंकारिकंसर्गं ॥ ११ ॥ १२ ॥ १३ ॥ हारिभिर्हरणशीलैः गुणैःरूपादिभिः ॥ १४ ॥ त्रीणीति एतेषांविशेषोपा
...तिरिच्यतइत्याशयेनमनसःप्राधान्यंप्रतिपादयति मनश्चरतीत्यादिना ॥ १६ ॥ १७ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ इतिशांति० मोक्ष० नै० भा० एकादशाधिकात्रिशततमोऽध्यायः ॥ २११ ॥ ॥ ५ ॥ विनाशिफलत्वेपिभोजनादिवत्तत्त्वानामुपास्तिरादर्तव्येत्याशंक्यतत्फलस्यांतेबीभत्सतांदर्शयितुंप्रलयमाह तत्त्वानामित्यादिना ॥ १ ॥ २ ॥ अहंकृतंनरंअहंकाराभिमानिनंमहारुद्रं ॥ ३ ॥ सूर्यरूपीरुद्रएवशतसूर्यसमोभूत् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ जाज्वलतिअतिशयेनज्वलति ॥ ८ ॥ ९ ॥ अष्टात्मकःयथाद्वादशात्मासूर्यः एवमष्टात्मकोवायुःसर्वैःस्वरूपैर्युगपद्वातीत्यर्थः ॥ १० ॥ ११ ॥ अहंकारःअहंकारंमहानात्माग्रसतीत्यनुषज्जते ॥१२॥ शंभुःईश्वरः तमेवविशिनष्टि अणिमेति सर्वसिद्धिरूपइत्यर्थः ॥ १३ ॥ सर्वतइत्यादिनाऐश्वरंज्ञेयंरूपमुक्तं ॥ १४ ॥

मनसिव्याकुलेचक्षुःपश्यन्नपिनपश्यति ॥ तथेंद्रियाणिसर्वाणिपश्यंतीत्यभिचक्षते ॥ १८ ॥ नचेंद्रियाणिपश्यंतिमनएवात्रपश्यति ॥ मनस्युपरतेराजन्निंद्रियोपरमोभवेत् ॥ १९ ॥ तदिंद्रियेपूपरमोमनस्युपरमोभवेत् ॥ एवंमनःप्रधानानिइंद्रियाणिप्रभावयेत् ॥ २० ॥ इंद्रियाणांतुसर्वेषामीश्वरंमनउच्यते ॥ एतद्विशंतिभूतानिसर्वाणीहमहायशः ॥ २१ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० जनकयाज्ञवल्क्यसंवादेएकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥ ॥ ५ ॥

याज्ञवल्क्यउवाच तत्त्वानांसर्वसंख्याचकालसंख्यातथैवच ॥ मयाप्रोक्तानुपूर्व्येणसंहारमपिमेशृणु ॥ १ ॥ यथासंहरतेजंतून्ससर्जचपुनःपुनः ॥ अनादिनिधनोब्रह्मानित्यश्चाक्षरएवच ॥ २ ॥ अहःक्षयमथोबुद्ध्वानिशिस्वप्नमनास्तथा ॥ चोदयामासभगवानव्यक्तोहंकृतंनरं ॥ ३ ॥ ततःशतसहस्रांशुरव्यक्तेनाभिचोदितः ॥ कृत्वाद्वादशधात्मानमादित्योज्वलदग्निवत् ॥ ४ ॥ चतुर्विधंमहीपालनिर्दहत्याशुतेजसा ॥ जरायुजांडजस्वेदजोद्भिज्जंचनराधिप ॥ ५ ॥ एतदुन्मेषमात्रेणविनष्टंस्थाणुजंगमं ॥ कूर्मपृष्ठसमाभूमिर्भवत्यथसमंततः ॥ ६ ॥ जगद्दग्ध्वामितबलःकेवलांजगतींततः ॥ अंभसाबलिनाक्षिप्रमापूरयतिसर्वशः ॥ ७ ॥ ततःकालाग्निमासाद्यतदंभोयातिसंक्षयं ॥ विनष्टेऽभसिराजेंद्रजाज्वलत्यनलोमहान् ॥ ८ ॥ तमप्रमेयोतिबलंज्वलमानंविभावसुं ॥ ऊष्माणंसर्वभूतानांसप्तार्चिषमथांजसा ॥ ९ ॥ भक्षयामासभगवान्वायुरष्टात्मकोबली ॥ विचरन्नमितप्राणस्तिर्यगूर्ध्वमधस्तथा ॥ १० ॥ तमप्रतिबलंभीमम्माकाशंग्रसतेत्मना ॥ आकाशमप्यभिनदन्मनोग्रसतिचाधिकं ॥ ११ ॥ मनोग्रसतिभूतात्मासोहंकारःप्रजापतिः ॥ अहंकारोमहानात्माभूतभव्यभविष्यवित् ॥ १२ ॥ तमप्यनुपमात्मानंविश्वंशंभुःप्रजापतिः ॥ अणिमालघिमाप्राप्तिरीशानोज्योतिरव्ययः ॥ १३ ॥ सर्वतःपाणिपादांतःसर्वतोक्षिशिरोमुखः ॥ सर्वतःश्रुतिमाँल्लोकेसर्वमावृत्यतिष्ठति ॥ १४ ॥

हृदयंत्हृदयस्थायाबुद्धेःप्रवर्त्तकः पर्वणाएकदेशेनअंगुष्ठमात्रकः बुध्युपाधिवशादंगुष्ठपर्वमात्रइत्यर्थः अंगुष्ठमात्रःपुरुषोऽन्तरात्मेत्यादिश्रुतेः विश्वंमहदंतं ॥ १५ ॥ महात्मनोपिनाशेसर्वंब्रह्मसमभवत्आविर्भ
वति क्षयोऽपचयोव्ययोनाशोव्रणःपरिणामस्तैःरहितं अनघंमायादोषास्पर्शिनं ॥ १६ ॥ इमंचप्रलयंयोगिनोनित्यमनुभवंतीत्यहरहरनुष्ठेयइत्याशयेनाहाध्यात्ममिति अयंभावः अथातोविभूतयोस्यपु
रुषस्यवाचासृष्टौपृथिवीचाग्निश्चेत्यादिश्रुत्याऽध्यात्मिकवाचःसकाशादाधिभौतिकानांपृथिव्यादीनामाधिदैविकानामग्न्यादीनांचोत्पत्तिःश्रुताअतोवाचोनिग्रहेतत्कार्ययोःपृथिव्यग्न्योरपिप्रलयोभवतीतिसर्व
कारणलयात्सर्वलयेसतिकेवलोऽद्वैतोवशिष्यते ननुवागादेर्लयेपिव्यवहारानुच्छेदादग्न्यादिलयोनयुज्यतइतिचेत्भ्रांतोसि येऽग्न्यादीन्पश्यंतितेषांवागादयोलीनाःसंतियस्यतुवागादयोलीनास्तेनासौवन्ह्यादीन्पश्य

भूतभव्यभविष्याणांस्रष्टारमन
कारणलयात्सर्वलयेसतिकेवलोऽद्वैतोवशिष्यते ॥ तथाहि ... ॥ १५ ॥ ततःसमभवत्सर्वमक्षयाव्ययमव्रणं ॥

हृदयंसर्वभूतानांपर्वणांगुष्ठमात्रकः ॥ अथग्रसत्यनंतोहिमहात्माविश्वमीश्वरः ॥ १५ ॥ ततःसमभवत्सर्वमक्षयाव्ययमव्रणं ॥ भूतभव्यभविष्याणांस्रष्टारमन
घंतथा ॥ १६ ॥ एषोऽप्ययस्तेराजेंद्रयथावत्समुदाहृतः ॥ अध्यात्ममधिभूतंचअधिदैवंचश्रूयतां ॥ १७ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० याज्ञवल्क्यजन
कसंवादेद्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥ ॥ ॥ याज्ञवल्क्यउवाच पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ॥ गंतव्यमधिभूतं
चविष्णुस्तत्राधिदैवतं ॥ १ ॥ पायुरध्यात्ममित्याहुर्यथातत्त्वार्थदर्शिनः ॥ विसर्गमधिभूतंचमित्रस्तत्राधिदैवतं ॥ २ ॥ उपस्थोध्यात्ममित्याहुर्यथायोगप्रदर्शि
नः ॥ अधिभूतंतथानंदोदैवतंचप्रजापतिः ॥ ३ ॥ हस्तावध्यात्ममित्याहुर्यथासंख्यानदर्शिनः ॥ कर्तव्यमधिभूतंतुइंद्रस्तत्राधिदैवतं ॥ ४ ॥ वागध्यात्ममितिप्राहु
र्यथाश्रुतिनिदर्शिनः ॥ वक्तव्यमधिभूतंतुवह्निस्तत्राधिदैवतं ॥ ५ ॥ चक्षुरध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥ रूपमत्राधिभूतंतुसूर्यश्चाप्यधिदैवतं ॥ ६ ॥
श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥ शब्दस्तत्राधिभूतंतुदिशश्चात्राधिदैवतं ॥ ७ ॥ जिव्हामध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥ रसएवाधिभूतंतु
आपस्तत्राधिदैवतं ॥ ८ ॥ घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ॥ गंधएवाधिभूतंतुपृथिवीचाधिदैवतं ॥ ९ ॥ त्वगध्यात्ममितिप्राहुस्तत्त्वबुद्धिविशारदाः
स्पर्शमेवाधिभूतंतुपवनश्चाधिदैवतं ॥ १० ॥ मनोध्यात्ममितिप्राहुर्यथाशास्त्रविशारदाः ॥ मंतव्यमधिभूतंतुचंद्रमाश्चाधिदैवतं ॥ ११ ॥ आहंकारिकमध्यात्म
माहुस्तत्त्वनिदर्शिनः ॥ अभिमानोधिभूतंतुबुद्धिश्चात्राधिदैवतं ॥ १२ ॥ बुद्धिरध्यात्ममित्याहुर्यथावदभिदर्शिनः ॥ बोद्धव्यमधिभूतंतुक्षेत्रज्ञश्चाधिदैवतं ॥ १३ ॥
एषातेव्यक्तितोराजन्विभूतिरनुदर्शिता ॥ आदौमध्येतथांतेचयथातत्त्वेनतत्त्ववित् ॥ १४ ॥

तीति नन्वेवंप्रपंचस्यरज्जूरगतुल्यतास्यात् योगिदृष्ट्यानाशेपीतरदृष्ट्यातदभावादितिचेत् इष्टापत्तिः नहिनित्यस्त्तंनिहितंवस्तुबहूनामलुप्तदृशांमध्येकश्चिन्नपश्यतीतरेतुपश्यंतीतियुज्यते तस्माद्रज्जूरगसमस्या
स्यसंसारस्योच्छेदायतत्त्वज्ञानार्थंयत्नआस्थेयइति ॥ १७ ॥ इतिशांति० मोक्ष० नै० भा० द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥ ॥ ७ ॥ पादाविति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥
... ॥ १३ ॥ एषेति आदौमध्येऽतेचेतिसृष्टिसमाधिप्रलयप्रपंचनेनैकाद्वितीयस्यैवकृत्स्नंद्वैतंविभूतिःसर्पइवरज्ज्वामितिदर्शितमित्यर्थः ॥ १४ ॥

प्रकृतिरविद्यासुप्तिप्रबोधवद्रात्रिदिनवदुन्मीलननिमीलनवच्चगुणान्महदादीन्विकुरुतेविशेषणाविष्कुरुते तेनप्रकरोतीतिप्रकृतिपदस्यव्युत्पत्तिर्दर्शिता किंचक्रीडार्थंसंज्ञायामितिकृत्रःसंज्ञायांक्तिच् स्वच्छंदेने तिप्रेरकांतराभावउक्तः आत्मकाम्ययाक्रीडार्थंचेतिमोक्षभोगौतत्फलमुक्तं ॥ १५ ॥ दीपदृष्टांतेनक्रीडाविषयाणामानंत्यमुक्तं तेनपरिणामक्रमेणमोक्षफलमपियत्नंविनास्वयमेवअभिविप्स्यतीतिप्रत्याशानकार्येति दर्शितं ॥ १६ ॥ गुणविकारानेवाह सत्वमित्यादिना सत्वंधैर्यं उद्रेकऐश्वर्यं शेषंस्पष्टार्थं ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ इतिशां०नि०

प्रकृतिर्गुणान्विकुरुतेस्वच्छंदेनात्मकाम्यया ॥ क्रीडार्थंतुमहाराजशतशोथसहस्रशः ॥ १५ ॥ यथादीपसहस्राणिदीपान्मर्त्याःप्रकुर्वते ॥ प्रकृतिस्तथाविकुरुते पुरुषस्यगुणान्बहून् ॥ १६ ॥ सत्वमानंदउद्रेकःप्रीतिःप्राकाम्यमेवच ॥ सुखंशुद्धित्वमारोग्यंसंतोषःश्रद्दधानता ॥ १७ ॥ अकार्पण्यमसंरंभःक्षमाधृतिरहिंसना ॥ समतासत्यमानृण्यंमार्दवंह्रीरचापलं ॥ १८ ॥ शौचमार्जवमाचारमलौल्यंहृद्यसंभ्रमः ॥ इष्टानिष्टवियोगानांकृतानामविकत्थना ॥ १९ ॥ दानेनचात्मग्रहण मस्पृहत्वंपरार्थता ॥ सर्वभूतदयाचैवसत्वस्यैतेगुणाःस्मृताः ॥ २० ॥ रजोगुणानांसंघातोरूपमैश्वर्यविग्रहौ ॥ अत्यागित्वमकारुण्यंसुखदुःखोपसेवनं ॥ २१ ॥ परापवादेषुरतिर्विवादानांचसेवनं ॥ अहंकारमसत्कारश्चिंतावैरोपसेवनं ॥ २२ ॥ परितापोभिहरणंह्रीनाशोनार्जवंतथा ॥ भेदःपरुषताचैवकामक्रोधौमद स्तथा ॥ २३ ॥ दर्पोद्वेषोतिवादश्चएतेप्रोक्तारजोगुणाः ॥ तामसानांतुसंघातंप्रवक्ष्याम्युपधार्यतां ॥ २४ ॥ मोहोप्रकाशस्तामिस्रमंधतामिस्रसंज्ञितं ॥ मरणं चांधतामिस्रंतामिस्रंक्रोधउच्यते ॥ २५ ॥ तमसोलक्षणानीहभक्षणाद्यभिरोचनं ॥ भोजनानामपर्याप्तिस्तथापेयेष्वतृप्तता ॥ २६ ॥ गंधवासोविहारेषुशयने ष्वासनेषुच ॥ दिवास्वप्नेतिवादेचप्रमादेषुचवैरतिः ॥ २७ ॥ नृत्यवादित्रगीतानामज्ञानाच्छ्रद्दधानता ॥ द्वेषोधर्मविशेषाणामेतेवैतामसागुणाः ॥ २८ ॥ इति श्रीमहाभारतेशांति०मोक्ष०याज्ञवल्क्यजनकसंवादेत्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥ ॥ छ ॥ याज्ञवल्क्यउवाच एतेप्रधानस्यगुणा स्त्रयःपुरुषसत्तम ॥ कृत्स्नस्यचैवजगतस्तिष्ठंत्यनपगाःसदा ॥ १ ॥ अव्यक्तरूपोभगवान्शतधाचसहस्रधा ॥ शतधासहस्रधाचैवतथाशतसहस्रधा ॥ २ ॥



एतैर्गुणविकारैस्तत्प्रकाशकःपुरुषोऽनेकधाविक्रियतइवप्रकाशइवांगुल्याद्युपाधिभिराकाशइवकाहलकलशनलिकाद्यु पाधिभिर्दीर्घवर्तुलदंडाद्याकारतामिवप्रतिपद्यते तद्वत्तत्तदाकारानुरूपाणिचोत्तममध्यमाधमानिस्थानानिप्राप्नोतीत्यत्रप्रतिपाद्यते एतेप्रधानस्यगुणाइत्यादिना ॥ १ ॥ २ ॥

॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ निरूपगतात्पर्यमाह पुण्येति ॥ ९ ॥ पुण्यादिवियोगेहेतुंज्ञानिनामध्येसंभवमाह ज्ञानिनामिति तत्त्वज्ञसंगत्यातत्त्वंप्राप्यपुण्यपापविमुक्तोभवतीत्यर्थः अबीजंनिरविद्यं ॥ १० ॥ अव्यक्तस्थंअव्यक्तेऽमूर्तेब्रह्मणितिष्ठतीतितथा अव्यक्तद्वाराप्राप्यमित्यर्थः किमंजूषारत्नवन्नेत्याह सएषइति प्रकृतिःस्वरूपं नित्यंकूटस्थएवसउपचारात्प्रकृतिस्थइत्युच्यते घटाकाशेगतिरिवास्मिन्प्रकृतिस्थत्वमारोप्यते ॥ ११ ॥ एतेनायस्कांतकल्पेन प्रकृतिर्लोहतुल्या ॥ १२ ॥ उभयोरपितुल्यवच्चेतनत्वंमन्वानःप्रकृतेरचेतनत्वमाक्षिपति अनादीत्यादिना अमूर्तत्वंअदृश्यत्वं नचनित्यानुमेयेप्रधानेपु

कोटिशश्चकरोत्येपप्रत्यगात्मानमात्मना ॥ सात्विकस्योत्तमंस्थानंराजसस्येहमध्यमं ॥ ३ ॥ तामसस्याधमंस्थानंप्राहुरध्यात्मचिंतकाः ॥ केवलेनेहपुण्येनगतिमूर्ध्वामवाप्नुयात् ॥ ४ ॥ पुण्यपापेनमानुष्यमधर्मेणाप्यधोगतिं ॥ द्वंद्वमेषांत्रयाणांतुसन्निपातंचतद्वतः ॥ ५ ॥ सत्वस्यरजसश्चैवतमसश्चशृणुष्वमे ॥ सत्वस्यतुरजोदृष्टंरजसश्चतमस्तथा ॥ ६ ॥ तमसश्चतथासत्वंसत्वस्याव्यक्तमेवच ॥ अव्यक्तःसत्वसंयुक्तोदेवलोकमवाप्नुयात् ॥ ७॥ रजःसत्वसमायुक्तोमानुपेपुप्रपद्यते ॥ रजस्तमोभ्यांसंयुक्तस्तिर्यग्योनिषुजायते ॥ ८ ॥ राजसैस्तामसैःसत्वैर्युक्तोमानुपमाप्नुयात् ॥ पुण्यपापवियुक्तानांस्थानमाहुर्महात्मनां ॥ ९ ॥ शाश्वतंचाव्ययंचैवनक्षयंचामृतंचतत् ॥ ज्ञानिनांसंभवंश्रेष्ठंस्थानमव्रणमच्युतं ॥ अतींद्रियमबीजंचजन्ममृत्युतमोनुदं ॥ १० ॥ अव्यक्तस्थंपरंयत्तत्पृष्टस्तेहंनराधिप ॥ सएषप्रकृतिस्थोहितत्स्थइत्यभिधीयते ॥ ११ ॥ अचेतनाचैवमताप्रकृतिश्चापिपार्थिव ॥ एतेनाधिष्ठिताचैवसृजतेसंहरत्यपि ॥ १२ ॥ जनकउवाच

अनादिनिधनावेतावुभावेवमहामते ॥ अमूर्तिमंतावचलावप्रकंप्यगुणागुणौ ॥ १३ ॥ अग्राह्यावृषिशार्दूलकथमेकोह्यचेतनः ॥ चेतनावांस्तथाचैकःक्षेत्रज्ञइतिभाषितः ॥ १४॥ त्वंहिविप्रेंद्रकार्त्स्न्येनमोक्षधर्ममुपाससे ॥ साकल्यंमोक्षधर्मस्यश्रोतुमिच्छामितत्त्वतः ॥ १५॥ अस्तित्वंकेवलत्वंचविनाभावंतथैवच ॥ दैवतानिचमेब्रूहिदेहंयान्याश्रितानिवै ॥ १६ ॥

रूपेचतुल्यमतस्तयोरनादिनिधनत्वंततश्चाप्रकंप्यगुणागुणत्वं अगुणःसंगित्वादिर्दोषः गुणोऽसंगित्वादिः अप्रच्युतस्वभावावित्यर्थः ॥ १३ ॥ अग्राह्यत्वाच्चनयोर्वैलक्षण्यंननिश्चेतुंशक्यमित्याहाग्राह्याविति ॥ १४ ॥ १५ ॥ एवंपुंसश्चेतनत्वेपिअस्तित्वंकथं वन्ध्यौष्ण्ययोरिवपुंप्रकृत्योर्युगपन्नाशावश्यंभावात् अस्तित्वेवाकेवलत्वंप्रकृत्यावियुक्तत्वंकथं पुंसोविभुत्वेनप्रकृतेरविनाशेनचतदसंभवात् ननुतर्कमनेआत्ममनसोरिवपुंप्रकृत्योर्नित्ययोगेपिफलोपहितोविलक्षणःसंयोगोन्यःसचकादाचित्कइतितदभावान्मोक्षेपुंसःकेवलत्वंयुज्यतइत्याशंक्याह विनाभावमिति निरवयवेपुंसिअव्याप्यवर्तिनःसंयोगस्यैवासंभवात् अभ्युपगमेपितत्वादिवत्प्रदेशभेदाभावेनतद्वैलक्ष्यण्यस्यसुतरामसंभवाच्चदृष्टांतेदार्ष्टांतिकेचतुल्यवत्संयोगासिद्धेर्दृश्यमानस्यसंयोगस्यमिथ्यात्वमंतरेणविनाभावोनसंभवति मिथ्यात्वंचप्रत्यक्षादिप्रमाणवि

॥२१७॥

उत्क्रामिणउत्क्रांतस्य विपद्यताम्रियमाणस्य ॥ १७ ॥ अरिष्टानिमृत्युसूचकानि ॥ १८ ॥ इतिशांति० मोक्ष० नै० भा० चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥ ॥ ५ ॥ कथमेकोद्य
चेतनइतिचेतनाचेतनविभागमाक्षिपतस्तवोभावपिकिंचेतनौअचेतनौवासंमतौ नांत्यः जगदांध्यप्रसंगात् नाद्यः दृश्यमानस्यदृग्दृश्यविभागस्यदुरपन्हवत्वात् अथयथामलयेचंदनाचंदनावपिचंदनावेवभ
वतएवमनादिसंयोगाच्चेतनाचेतनावपितौचेतनावेवभवतइतिब्रूषे तदपिन स्वभावस्यापरिहार्यत्वादित्याह नशक्यइति ॥ १ ॥ २ ॥ स्वभावतःअज्ञोपिआरोपितेनज्ञत्वेन उपयुंक्तेभुंक्ते तान्गुणान् ॥ ३ ॥ त

तथैवोत्क्रामिणःस्थानंदेहिनोवैविपद्यतः ॥ कालेनयद्धिप्राप्नोतिस्थानंतत्प्रब्रवीहिमे ॥ १७ ॥ सांख्यज्ञानंचतत्त्वेनपृथग्योगंतथैवच ॥ अरिष्टानिचतत्त्वानिवक्तु
मर्हसिसत्तम ॥ विदितंसर्वमेतत्तेपाणावामलकंयथा ॥ १८ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० प० याज्ञवल्क्यजनकसंवादेचतुर्दशाधिकत्रि
शततमोऽध्यायः ॥ ३१४ ॥ ॥ ५ ॥ याज्ञवल्क्यउवाच नशक्योनिर्गुणस्तांतगुणीकर्तुंविशांपते ॥ गुणवांश्चाप्यगुणवान्यथातत्त्वंनिबोधमे ॥
॥ १ ॥ गुणैर्हिगुणवानेवनिर्गुणश्चागुणस्तथा ॥ प्राहुरेवंमहात्मानोमुनयस्तत्त्वदर्शिनः ॥ २ ॥ गुणस्वभावस्त्वव्यक्तोगुणान्नैवातिवर्तते ॥ उपयुंक्तेचतानेवस
चैवाज्ञःस्वभावतः ॥ ३ ॥ अव्यक्तस्तुनजानीतेपुरुषोज्ञःस्वभावतः ॥ नमत्तःपरमोस्तीतिनित्यमेवाभिमन्यते ॥ ४ ॥ अनेनकारणेनैतदव्यक्तंस्यादचेतनं ॥ नित्य
त्वाच्चाक्षरत्वाच्चक्षरत्वान्नतदन्यथा ॥ ५ ॥ यदाऽज्ञानेनकुर्वीतगुणसर्गंपुनःपुनः ॥ यदात्मानंनजानीतेतदात्मापिनमुच्यते ॥ ६ ॥

र्हिमुख्योभोक्ताकिंपुरुषइत्याशंक्यनेत्याह अव्यक्तइति अव्यक्तोऽदृश्योदृगात्मानजानीतेनभुंक्तेच यतः मत्तआत्मनोन्यंभोग्यमर्थंनपश्यति अभिमन्यतइतिव्युत्थानाभिप्रायेणोक्तं ॥ ४ ॥ अनेनभोक्तृत्वाभो
क्तृत्ववैलक्षण्येन एतत्अव्यक्तंप्रधानंस्वभावतःअचेतनमपितदन्यथाततोभोक्तुःसकाशादन्यथाविपरीतंअभोक्तृनस्यात् कथंजडेभोक्तृत्वमतआह अक्षरत्वात्क्षरत्वाच्चेति क्षराक्षरात्मत्वात् चिदचिदात्मकत्वा
त्तस्यभोक्तृत्वंनतुकाष्ठकुड्यवदचेतनांशमात्रस्येत्यर्थः नित्यत्वाच्चभोग्यभोक्तृविभागस्य नकश्चिद्दोषइत्यर्थः ॥ ५ ॥ ननुजतुकाष्ठयोरिवतुल्यस्वभावयोःसंश्लेषोदृष्टोनतुकाष्ठाकाशयोरितिचिदचितोःसंबं
धोदुर्निरूपइत्याशंक्याह यदेति अज्ञानेनेतिच्छेदः गुणसर्गंगुणसंसर्गं आद्योयदाशब्दोयस्मादर्थे यदितिपाठःस्वच्छः यस्मादाध्यासिकोयमज्ञानकृतआत्मनिगुणसंसर्गस्तस्माद्यावदात्मानमसंगंनजानातिताव
न्नमुच्यतेइत्यर्थः ॥ ६ ॥

अमुक्तिहेतुमाह कर्तृत्वादित्यादिना प्राकृतेनमहदादिनस्वकर्तृत्वेनायमपिकर्तायतोभवत्यतोनमुच्यतइत्यर्थः ॥७॥ प्रकृतीनांप्रजानां ॥८॥ बीजानांस्थावराणां गुणानांकामशमादीनां ॥९॥ नन्वेवंविप्रस्यक
अमुक्तिहेतुमाह कर्तृत्वादित्यादिना प्राकृतेनमहदादिनस्वकर्तृत्वेनायमपिकर्तायतोभवत्यतोनमुच्यतइत्यर्थः ॥७॥ प्रकृतीनांप्रजानां ॥८॥ बीजानांस्थावराणां गुणानांकामशमादीनां ॥९॥ नन्वेवंविप्रस्यक थंकेवलत्वंस्यादतआह उपेक्षत्वादिति उपसमीपेस्थित्वाईक्षतइत्युपेक्षःसाक्षी नहिसाक्ष्येणसाक्षीविक्रियतेघटेनालोकइवातःकेवलत्वमस्ययुज्यते यथोक्तं नतेस्याद्विक्रियादुःखोसाक्षिनाकाविकारिणः धी विक्रियासहस्राणांसाक्ष्यतोहमविक्रियइति ननुसाक्षित्वमस्तुमाभूत्प्रतिकूलवेदनीयंदुःखंत्वपरिहार्यमित्याशंक्याह अनन्यत्वादिति नास्त्यन्योस्मादित्यनन्यस्तत्त्वात् दुःखादेःस्वरूपेणाप्यसत्त्वान्नात्मनितत्संबंधः एवंधीतादात्म्यात्धीदुःखेनैवास्यदुःखित्वंधीत्यागेतुकेवलत्वंनित्यसिद्धमिति कदाचिदप्यस्तीत्यर्थः कुतस्तर्हिदुःखभानमतआह अभिमानादिति यदाहिपुत्रमात्मीयंमन्यतेतदातद्दुःखेनदुःखीभवतिनान्यथा

कर्तृत्वात्प्रकृतीनांचतथाप्रकृतिधर्मिता ॥ ८ ॥ कर्तृत्वाच्चापिबी
जानांबीजधर्मातथोच्यते ॥ गुणानांप्रसवत्वाच्चप्रलयत्वात्तथैवच ॥ ९ ॥ उपेक्षत्वादनन्यत्वादभिमानाच्चकेवलं ॥ मन्यंतेयतयःसिद्धाअध्यात्मज्ञागतज्वराः ॥
अनित्यंनित्यमव्यक्तंव्यक्तमेतद्विशुश्रुम ॥ १० ॥ अव्यक्तैकत्वमित्याहुर्नानात्वंपुरुषास्तथा ॥ सर्वभूतदयावंतःकेवलंज्ञानमास्थिताः ॥ ११ ॥ अन्यःसपुरुषो
ऽव्यक्तस्त्वध्रुवोध्रुवसंज्ञकः ॥ यथामुंजइषीकाणांतथैवैतद्विजायते ॥ १२ ॥ अन्यच्चमशकंविद्यादन्यच्चोदुंबरंतथा ॥ नचोदुंबरसंयोगैर्मशकस्तत्रलिप्यते ॥
॥ १३ ॥ अन्यएवतथामत्स्यस्तदन्यदुदकंस्मृतं ॥ नचोदकस्यस्पर्शेनमत्स्योलिप्यतिसर्वशः ॥ १४ ॥ अन्योह्यग्निरुखाप्यन्यानित्यमेवमवेहिभोः ॥ नचोपलि
प्यतेसोग्निरुखासंस्पर्शनेनवै ॥ १५ ॥ पुष्करंत्वन्यदेवात्रतथान्यदुदकंस्मृतं ॥ नचोदकस्यस्पर्शेनलिप्यतेतत्रपुष्करं ॥ १६ ॥ एतेषांसहवासंचनिवासंचैवनित्य
शः ॥ याथातथ्येनपश्यंतिननित्यंप्राकृताजनाः ॥ १७ ॥ येत्वन्यथैवपश्यंतिनसम्यक्तेषुदर्शनं ॥ तेव्यक्तंनिरयंघोरंप्रविशंतिपुनःपुनः ॥ १८ ॥ सांख्यदर्शनमेत
त्तेपरिसंख्यानमुत्तमं ॥ एवंहिपरिसंख्यायसांख्याःकेवलतांगताः ॥ १९ ॥

एतेनअस्तित्वकेवलत्वविनाभावानामाक्षेपःपरिहृतोज्ञेयः अनित्यमिति अनित्यंपरिणामि अव्यक्तंकारणं व्यक्तंकार्यमिति ॥ १० ॥ तत्रमतांतरमाह अव्यक्तस्यएकत्वंपुरुषाः षष्ठ्यर्थेप्रथमा पुरुषाणांना
नात्वमितिआहुर्निरीश्वरसांख्याः तान्विशिनष्टि सर्वेत्यर्धेन ॥ ११ ॥ पुंप्रकृत्योर्भेदमनेकदृष्टांतपूर्वकमाह अन्यइत्यादिना अव्यक्तइतिच्छेदः इषीकाणांबाह्योयथामुंजएवंपुंसोबाह्याअव्यक्ताद्याइत्यर्थः ॥१२॥१३॥१४॥ उखामृत्पात्रविशेषः ॥१५॥१६॥१७॥१८॥१९॥
[illegible] नांहृदयेसन्निविष्टः तस्माच्छरीरात्प्रवृहेन्मुंजादिवइषीकांधैर्येणतंविद्याच्छुक्रममृतमिति

॥ २० ॥ इतिशांति० मोक्ष० नै० भा० पंचदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥ ॥ छ ॥ सांख्यज्ञानमिति ॥ १ ॥ एकैवचर्या शमाद्यनुष्ठानं ययोस्तौ अनिधनौ मृत्युनाशकौ ॥ २ ॥ पृथगिति उभावितिद्वितीयांतमनुकृष्यते ॥ ३ ॥ ४ ॥ उत्क्रमणकालेदेहिनंरोदयंतीतिरुद्राःप्राणाइंद्रियाणिचतान्येवप्रधानभूतान्यालंबनानियेषुतान् तथाचसूत्रं प्रच्छर्दनविधारणाभ्यांवाप्राणस्यविषयवती चाप्रवृत्तिरुत्पन्नामनसःस्थितिनिबंधिनी प्रच्छर्दनंरेचकः विधारणंपूरकपूर्वकःकुंभकः तथानासिकाग्रेधारयतोगंधसंवित् जिव्हाग्रेरससंवित् तालुनिरूपसंवित् जिव्हामध्येस्पर्शसंवित् जिव्हामूलेशब्दसंवित्

- येत्वन्येतत्त्वकुशलास्तेषामेतन्निदर्शनं ॥ अतःपरंप्रवक्ष्यामियोगानामनुदर्शनं ॥ २० ॥ इतिश्रीमहाभारतेशांति० मोक्ष० याज्ञवल्क्यजनकसंवादेपंचदशाधिकत्रिशततमोऽध्यायः॥ ३१५॥ ॥छ॥ याज्ञवल्क्यउवाच सांख्यज्ञानंमयाप्रोक्तंयोगज्ञानंनिबोधमे ॥ यथाश्रुतंयथादृष्टंतत्त्वेननृपसत्तम॥ १ ॥ नास्तिसांख्यसमंज्ञानंनास्तियोगसमंबलं॥ तावुभावेकचर्यौतावुभावनिधनौस्मृतौ ॥ २ ॥ पृथक्पृथक्प्रपश्यंतियेप्यबुद्धिरतानराः॥ वयंतुराजन्पश्यामएकमेवतुनिश्चयात्॥ ३॥ यदेवयोगाःपश्यंतितत्सांख्यैरपिदृश्यते ॥ एकंसांख्यंचयोगंचयःपश्यतिसतत्त्ववित्॥ ४॥ रुद्रप्रधानानपरान्विद्धियोगानरिंदम॥ तेनैवचाथदेहेनविचरंतिदिशोदश॥ ५॥ यावद्धिप्रलयस्तातसूक्ष्मेणाष्टगुणेनह॥ योगेनलोकान्विचरन्सुखंसंन्यस्यचानघ॥ ६॥ वेदेषुचाष्टगुणिनंयोगमाहुर्मनीषिणः॥ सूक्ष्ममष्टगुणंप्राहुर्नेतरंनृपसत्तम॥ ७॥ द्विगुणंयोगकृत्यंतुयोगानांप्राहुरुत्तमं॥ सगुणंनिर्गुणंचैवयथाशास्त्रनिदर्शनं ॥ ८ ॥

तत्रवायुधारणायाःफलंविचरंतिदिशोदशेत्युक्तंखेचरत्वंप्राप्नुवंतीत्यर्थः ॥ ५ ॥ अष्टगुणेनपुर्यष्टकमयेनसूक्ष्मशरीरेणसंन्यस्यसंन्यासंचदेहस्यसुखंयथेच्छंकुरु एतद्यदृष्टंफलंमोक्षांतेषुयोगधर्मेषुश्रद्धोत्पादनार्थमुक्तंनतुयोगिनामवश्यादरणीयं ॥ ६ ॥ वेदेष्विति अष्टगुणिनंअणिमाद्यष्टगुणवंतं नित्ययोगेमत्वर्थीयः अष्टगुणंअष्टांगं प्राणायामःप्रत्याहारोध्यानंधारणातर्कःसमाधिःषडंगाइतिमैत्रायणीयोपनिषदिषडेवांगान्युक्तानितथापियमनियमाभ्यांश्रुत्यंतरोक्ताभ्यांसहाष्टसंख्याबोध्या अत्रसूक्ष्ममित्युक्तेःपूर्वस्यस्थूलत्वंमंदाधिकारित्वंचोक्तं तर्कोयोगसिद्धिषूपस्थितासुदोषोन्नयनं ॥ ७ ॥ द्विगुणंद्विप्रकारं तदेवाह सगुणंसबीजं निर्गुणंनिर्बीजं ॥ ८ ॥

सगुणमाह धारणमिति प्राणायामःप्राणनिग्रहपूर्वकंमनसःषोडशस्वाधारेषुधारणं तेचशिवयोगेप्रोक्ताः अथतेषोडशाधारान्कथयामिविशेषतइत्यादिनापादांगुष्ठपार्ष्णिगुल्फप्रभृतयोनेत्राधारंषोडशंत्वित्यं ताः यद्वायाज्ञवल्क्योक्ताःप्रागुदाहृताअष्टादशस्थानात्स्थानंसमाकृष्येत्यादिनादर्शिताग्राह्याः अथवायाज्ञवल्क्योक्ताएवपंचभूतधारणाज्ञेयाः पादादिजानुपर्यंतंपृथिवीस्थानमुच्यते आजानोःपायुपर्यंतमपां स्थानंप्रकीर्तितं आपायोर्हृदयांतंयद्वह्निस्थानंतदुच्यते हृन्मध्यात्तुभ्रुवोर्मध्येयावद्वायुकुलंभवेत् आभ्रूमध्यात्तुमूर्धांतमाकाशस्थानमुच्यते पृथिव्यांधारयेद्ब्रह्माणंपरमेष्ठिनं विष्णुमप्स्वनलेरुद्रमीश्वरंवा युमंडले सदाशिवंतथाव्योम्निधारयेत्सुसमाहितः पृथिव्यांवायुमास्थाप्यलकारेणसमन्वितं ध्यायंश्चतुर्मुखाकारंब्रह्माणंसृष्टिकारणं धारयेत्पंचघटिकाःपृथिवीजयमाप्नुयात् वारुणेवायुमारोप्यवकारेणसम न्वितं स्मरन्नारायणंदेवंचतुर्बाहुंशुचिस्मितं शुद्धस्फटिकसंकाशंपीतवाससमच्युतं धारयेत्पंचघटिकाःसर्वरोगैःप्रमुच्यते वह्नावनिलमारोप्यरेफाक्षरसमन्वितं त्र्यक्षंवरप्रदंरुद्रंतरुणादित्यसन्निभं भस्मोद्धू लितसर्वांगंसुप्रसन्नमनुस्मरन् धारयेद्घटिकाःपंचवह्निनासौनदह्यते मारुतंमरुतांस्थानेवर्णदेवसमन्विते धारयेत्पंचघटिकावायुवद्व्योमगोभवेत् आकाशेवायुमारोप्यहकारोपरिशंकरं बिंदुरूपंमहादेवंसर्वलो

धारणंचैवमनसःप्राणायामश्चपार्थिव ॥ एकाग्रताचमनसःप्राणायामस्तथैवच ॥ ९ ॥ प्राणायामोहिसगुणो निर्गुणंधारयेन्मनः ॥ यद्यदृश्यतिमुंचन्वैप्राणान्मैथिलसत्तम ॥ वाताधिक्यंभवत्येवतस्मात्तंनसमाचरेत् ॥ १० ॥

कैककारणं चित्तेनचिंतयेत्खस्थंमुहूर्तमपिधारयेत् सएवयुक्तइत्युक्तस्तांत्रिकैष्वपिशिक्षितैरिति निर्गुणमाह एकाग्रतेति एकमेवध्यातृध्येयध्यानविभागशून्यंवस्तुअग्रेयस्यतदेकाग्रंनिर्वृत्तिकंतस्यभावस्त त्ता मनसोबुद्धेः प्राणाइंद्रियाणिसमनस्कानितेषामायामोनिग्रहःप्राणायामः तथाचश्रुतिः यदापंचावतिष्ठंतेज्ञानानिमनसासह बुद्धिश्चनविचेष्टतितामाहुःपरमांगतिमिति ॥ ९ ॥ सगुणनिर्गुणयोरंगांगिभाव माहार्धेन प्राणायामोहीति निर्गुणंनिर्वृत्तिकंधारयेत्स्थिरंकुर्यात् यदीति अदृश्यतिअदृश्यमानेमोचनस्थानेयदिवायुंमुंचन्भवतितर्हिवाताधिक्यंभवत्येव अयमर्थः पूरकादीनांमूलाधारादीनांचदेवतादिकंध्या यन्योवायुधारणांकरोतिससिध्यति ध्यानवर्जितंत्वभ्यस्यन्नवश्यंबाध्यतइति यथोक्तंपवनयोगसंग्रहे प्राणायामेनयुक्तेनसर्वरोगक्षयोभवेत् अयुक्ताभ्यासयोगेनमहारोगसमुद्भवइति युक्तेनदेवताध्यानयुक्ते न देवताश्चयाज्ञवल्क्योक्ताः नीलोत्पलदलश्यामंनाभिमध्येव्यवस्थितं चतुर्भुजंमहात्मानंपूरकेणविचिंतयेत् कुंभकेनहृदिस्थानंध्यायेत्तुकमलासनं ब्रह्माणंरक्तगौरांगंचतुर्वक्त्रंपितामहं रेचकेनेश्वरंविद्याल्ल लाटस्थंमहेश्वरं शुद्धस्फटिकसंकाशंनिर्मलंपापनाशनमित्यादिना ॥ १० ॥

निशायाइति द्वादशपूर्वोक्ताः द्वाविंशतिचोदनाएवात्रसंक्षेपेणद्वादशग्रंथांतरेगणिनाः यथोक्तंशिवयोगे मूलाधारेत्रिधावर्तंब्रह्मचक्रंभगोपमं तत्कंदेग्निनिभेध्यायेदधःशक्तिमभीष्टदां १ स्वाधिष्ठानंततश्चक्रंतत्र चातुर्दलांबुजं तदेवोड्डीयनंध्यायेत्पश्चिमाभिमुखंशिवं २ पंचावर्तनाभिचक्रेमेघाकारंतडिन्निभं तत्रकुंडलिनींध्यायेदधःशक्तिसुसिद्धिदां ३ अधोमुखाष्टपत्राब्जयुक्तंहृच्चक्रमिष्टदं . तन्मध्यकर्णिकांध्याये ज्ज्योतिर्लिंगाकृतिंत्विमां ४ पंचमंकंठचक्रंतुतत्रांगुलचतुष्टयं इडापिंगलयोर्ध्यायेत्सुषुम्नांमध्यसंस्थितां षष्ठंचघंटिकालिंगमूलंतद्राजदंतकं ध्यायेत्तुदशमंद्वारंतत्रशून्यंसुसिद्धये ६ भ्रूचक्रंसप्तमंत्वेकंनालिकं दंस्ववाक्प्रदं ध्यायेद्दिव्यशिखाकारंतन्मध्येज्ञानलोचनं ७ ब्रह्मरंध्रेष्टमंचक्रंनिर्वाणाख्यंमुसूक्ष्मदं तत्रजालंधरंध्यायेत्सूक्ष्मंमोक्षप्रदंततः ८ आकाशबीजंनवमंप्रशस्तंत्रिकूटकंपूर्णगिरेश्चपृष्ठे, तत्रोर्ध्वशक्तिंशु भदांसुशून्यांध्यायेच्चसाष्टारसरोजमध्ये ९ आकाशबीजंहकारस्तत्स्मरणपूर्वकंशिरसउपरिभूताकाशमात्रंध्यायेत् एतानवचोदनावायुनिग्रहगर्भिताः ततःशून्यात्परंसमष्टिकार्यैमनोधारयेत् ततःकारणेततो

- निशायाःप्रथमेयामेचोदनाद्वादशस्मृताः॥ मध्येस्वप्नात्परेयामेद्वादशैवतुचोदनाः॥ ११ ॥ तदेवमुपशांतेनदांतेनैकांतशीलिना॥ आत्मारामेणवृद्धेनयोक्त व्योत्मानसंशयः॥ १२॥ पंचानामिंद्रियाणांतुदोषानाक्षिप्यपंचधा॥शब्दंरूपंतथास्पर्शंरसंगंधंतथैवच ॥ १३ ॥ प्रतिभामपवर्गंचप्रतिसंहृत्यमैथिल॥ इं द्रियग्राममखिलंमनस्यभिनिवेश्यह ॥ १४॥ मनस्तथैवाहंकारेप्रतिष्ठाप्यनराधिप॥ अहंकारंतथाबुद्धौबुद्धिंचप्रकृतावपि ॥१५॥ एवंहिपरिसंख्यायततोध्या यंतिकेवलं॥ विरजस्कमलंनित्यमनंतंशुद्धमव्रणं॥ १६॥ तस्थुषंपुरुषंनित्यमभेद्यमजरामरं॥ शाश्वतंचाव्ययंचैवईशानंब्रह्मचाव्ययं ॥ १७॥ युक्तस्यतुम हाराजलक्षणान्युपधारय॥ लक्षणंतुप्रसादस्ययथातृप्तःसुखंस्वपेत्॥ १८॥ निर्वातेतुयथादीपोज्वलेत्स्नेहसमन्वितः॥ निश्चलोर्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषि णः॥ १९॥ पाषाणइवमेघोत्थैर्यथाबिंदुभिराहतः॥ नालंचालयितुंशक्यस्तथायुक्तस्यलक्षणं॥ २०॥ शंखदुंदुभिनिर्घोषैर्विविधैर्गीतवादितैः॥ क्रियमाणै र्नकंपेतमुक्तस्यैतन्निदर्शनं॥ २१॥

निष्कलेइतिनिस्रएवंद्वादशचोदनाः पूर्वरात्रेआवर्त्यएकांनिद्रांगृहीत्वापश्चात्पुनर्द्वादशएताएवाभ्यसेदित्यर्थः ॥ ११ ॥ एवंवायुधारणाद्युपायेन दुर्दांतंमनोनिगृह्यउपशांतेनदांतेनतत्त्वप्रतिपत्तियोग्येन एकां तशीलिनाएकाकिनासंन्यासिनेत्यर्थः आत्मन्येवननुरूप्यादौआरमणंयस्यतेनआत्मारामेण बुद्धेनशास्त्रतत्त्वविदा आत्मायोक्तव्यः संधिराषः ॥ १२ ॥ कथंयोक्तव्यइत्यतआह पंचानामिति दोषान्अप्राप्त स्पृहारूपान् प्राप्तमपिशब्दादिकंचआक्षिप्यनिरस्य एतेनप्रत्याहारउक्तः ॥ १३ ॥ प्रतिभांविक्षेपं अपवर्गलयं प्रतिसंहारेयुक्तिमाह इंद्रियेति ॥ १४ ॥ बुद्धौमहत्तत्त्वे ॥ १५ ॥ परिसंख्यायप्रविलाप्य अ लंअत्यर्थंनित्यंनत्वाकाशादिवद्व्यावहारिकनित्यं ॥ १६ ॥ तस्थुषंतस्थिवांसंस्थाणुंकूटस्थमित्यर्थः नित्यमभेद्यं अज्ञानदशायांजीवेश्वरभावेनमाययाभिद्यमानमप्याकाशवदभेद्यं अव्ययंअनश्वरं यतः अ व्ययंह्रासशून्यं ॥ १७ ॥ युक्तस्यसमाधिस्थस्य सुखंस्वपेदितिस्वसंवेद्यंलक्षणं ॥ १८ ॥ १९ ॥ पाषाणइवेतिपरसंवेद्यं ॥ २० ॥ २१ ॥

युक्तस्यलक्षणान्युक्त्वायुंजानस्याह तैलेति उत्तरंउत्कृष्टतरं एकाग्रमनसः लक्षणमितिशेषः ॥ २२ ॥ २३ ॥ स्थिरत्वात्बहिर्मुखत्वनिवृत्तेः निश्चलत्वात्अंतरप्रकंप्यत्वात् ॥ २४ ॥ महतःमहत्तत्वस्य मध्येस्थितंत्वंपदार्थं तमसोमध्येस्थितं तत्पदार्थंज्वलनसन्निभंचिन्मात्रंतदुभयनिष्कृष्टं ॥२५॥ एतेनदर्शनेन केवलंमोक्षं देहत्यागात्यात्किंचिदज्ञानानुवृत्तिरस्तीतिभावः॥२६। योगं क्लीबत्वमार्षं वयंकुर्मःकृत्या इतिमन्यंतेमनीषिणः अनुभवसिद्धंयोगात्कैवल्यमित्यर्थः तथाचश्रुतिः ऊर्ध्वमूलमवाक्शाखंवृक्षंयोवेदसंप्रति . नसजातुजनःश्रद्दध्यान्मृत्युर्मामारयादिति ॥ २७ ॥ इतिशांति० मोक्ष० नै० भा० षोडशा धिकत्रिशततमोऽध्यायः ॥ ३१६ ॥

तैलपात्रंयथापूर्णंकराभ्यांगृह्यपूरुषः॥ सोपानमारुहेद्भीतस्तर्ज्यमानोसिपाणिभिः॥ संयतात्माभयात्तस्यपात्राद्बिंदुमुत्सृजेत्॥ तथैवोत्तरमागम्यएकाग्रमनसस्तथा॥ २३॥ स्थिरत्वादिंद्रियाणांतुनिश्चलत्वात्तथैवच॥ एवंयुक्तस्यतुमुनेर्लक्षणान्युपलक्षयेत्॥ २४॥ स्वयुक्तःपश्यतेब्रह्मयत्तत्परमभव्ययं॥ महतस्तमसोमध्येस्थितंज्वलनसन्निभं॥ २५॥ एतेनकेवलंयातिनित्यक्त्वादेहमसाक्षिकं॥ कालेनमहताराजन्श्रुतिरेषासनातनी॥ २६॥ एतद्धियोगंयोगानांकिमन्यद्योगलक्षणं॥ विज्ञायतद्धिमन्यंतेकृतकृत्यामनीषिणः॥ २७॥ इतिश्रीमहाभारतेशांतिप०मोक्ष०षोडशाधिकत्रिशततमोऽध्यायः॥ ३१६॥

याज्ञवल्क्यउवाच तथैवोत्क्रममाणंतुशृणुष्वावहितोनृप॥ पद्भ्यामुत्क्रममाणस्यवैष्णवंस्थानमुच्यते॥१॥ जंघाभ्यांतुवसून्देवानाप्नुयादितिनःश्रुतं॥ जानुभ्यांचमहाभागान्साध्यान्देवानवाप्नुयात्॥ २॥ पायुनोत्क्रममाणस्तुमैत्रंस्थानमवाप्नुयात्॥ पृथिवींजघनेनाथ ऊरुभ्यांचप्रजापतिं॥३॥ पार्श्वाभ्यांमरुतोदेवान्नाभ्यामिंद्रत्वमेवच॥ बाहुभ्यामिंद्रमेवाहुरुरसारुद्रमेवच॥ ४॥ ग्रीवयातुमुनिश्रेष्ठंनरमाप्नोत्यनुत्तमं॥ विश्वेदेवान्मुखेनाथदिशःश्रोत्रेणचाप्नुयात्॥ ५॥ घ्राणेनगंधवहनंनेत्राभ्यामग्निमेवच॥ भ्रूभ्यांचैवाश्विनौदेवौललाटेनपितॄनथ॥ ६॥ ब्रह्माणमाप्नोतिविभुंमूर्ध्नादेवाग्रजंतथा॥ एतान्युत्क्रमणस्थानान्युक्तानिमिथिलेश्वर॥ ७॥ अरिष्टानिप्रवक्ष्यामि विहितानिमनीषिभिः॥ संवत्सरवियोगस्यसंभवंतिशरीरिणः॥ ८॥ योरुंधतींनपश्येतदृष्टपूर्वांकदाचन॥ तथैवध्रुवमित्याहुःपूर्णेंदुंदीपमेवच॥ ९॥ खंडाभासंदक्षिणतस्तेपिसंवत्सरायुषः॥ परचक्षुषिचात्मानंयेनपश्यंतिपार्थिव॥ १०॥

॥ ५॥ कैवल्यप्राप्तिराजयोगफलमुक्त्वाहठयोगफलमाह तथैवेत्यादिना अत्रयस्मिन्यस्मिन्नाधारेसमनस्कोवायुरामरणांतंध्रियतेतेनतदाधारदेवतालोकंतेनतेनैवाधारद्वारेणोत्क्रम्यगच्छतीतिप्रघट्टकतात्पर्यं ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ मूर्ध्नासुषुम्नयानाड्याब्रह्मरंध्रेण एतत्क्रममुक्तिस्थानंनान्यत् तथाचश्रुतिः शतंचैकाचहृदयस्यनाड्यस्तासांमूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेतिविष्वङ्ङन्याउत्क्रमणेभवंतीति ॥७॥ मृत्युंसंनिहितंज्ञात्वापिहितमाचरेदित्याशयेनाह अरिष्टानीति ॥ ८ ॥ ९ ॥ १० ॥

* संवत्सेणमृत्योः

॥ ११॥ प्रकृतेर्विक्रियादातुःकार्पण्यंकृपणस्यदातृत्वमित्यादिः ॥ १२॥ कृष्णस्यश्यावच्छविधूसरतानच्छायापत्तिर्मरणचिन्हं छिद्रं छिद्रवंतं ॥ १३॥ शवगंधमिति सुरभिद्रव्येशवगंधग्रहइत्यर्थः ॥ १४॥ १५॥
॥ १६ ॥ अरिष्टज्ञानफलमाह एतावंतीति ॥ १७ ॥ योगिनोमरणादन्यत्कर्त्तव्यंनास्तीत्याह प्रतीक्षमाणइति ॥ १८ ॥ मृत्युमपिनेच्छेच्चेदिमांवक्ष्यमाणांक्रियांस्थातुंकर्तुमिच्छेदित्याहाथेति पूर्वोक्तरीत्या
पृथिव्यादिजयाद्गंधादिजयोभवतीतिपंचभूतजयान्मृत्युंजयतीत्यर्थः तथाचश्रुतिः पृथ्व्याप्यतेजोनिलखेसमुत्थितेपंचात्मकेयोगगुणेप्रवृत्ते नतस्यरोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरमिति ॥ १९ ॥
सांख्ययोगयोर्मुख्यंफलमाह ससांख्येति सांख्यंचधारणेतियोगउच्यते ताभ्यांसमुच्चिताभ्यांसहितंयथास्यात्तथा विदितात्मा मृत्युंसंसारं ॥ २० ॥ गच्छेदिति अक्षयंअविनाशि अव्ययंअपचयशून्यं अच

आत्मच्छायाकृतीभूतंतेपिसंवत्सरायुषः॥ अतिद्युतिरतिप्रज्ञाअप्रज्ञाचाद्युतिस्तथा॥ ११ ॥ प्रकृतेर्विक्रियापत्तिःषण्मासान्मृत्युलक्षणं॥ दैवतान्यवजानाति
ब्राह्मणैश्वविरुध्यते॥ १२॥ कृष्णश्यावच्छविच्छायःषण्मासान्मृत्युलक्षणं॥ ऊर्णनाभेर्यथाचक्रंछिद्रंसोमंप्रपश्यति॥ १३॥ तथैवचसहस्रांशुंसप्तरात्रेणमृत्युभा
क्॥ शवगंधमुपाघ्रातिसुरभिंप्राप्ययोनरः॥ १४॥ देवतायतनस्थस्तुसप्तरात्रेणमृत्युभाक्॥ कर्णनासावनमनंदंतदृष्टिविरागिता॥ १५॥ संज्ञालोपोनिरूष्म
त्वंसद्योमृत्युनिदर्शनं॥ अकस्माच्चसवेयस्यवाममक्षिनराधिप॥ १६॥ मूर्धतश्चोत्पतेद्धूमःसद्योमृत्युनिदर्शनं ॥ एतावंतित्वरिष्टानिविदित्वामानवात्मवान्
॥ १७॥ निशिचाहनिचात्मानंयोजयेत्परमात्मनि॥ प्रतीक्षमाणस्तत्कालंयत्कालंप्रेतताभवेत्॥ १८॥ अथास्यनेष्टंमरणंस्थातुमिच्छेदिमांक्रियां॥ सर्वगंधान्
रसांश्चैवधारयीतनराधिप॥ १९॥ ससांख्यधारणंचैवविदितात्मानरर्षभ॥ जयेच्चमृत्युंयोगेनतत्परेणांतरात्मना॥ २०॥ गच्छेत्प्राप्याक्षयंकृत्स्नमजन्मशिवमव्य
यं॥ शाश्वतंस्थानमचलंदुष्प्रापमकृतात्मभिः॥ २१॥ इति० भा० शांति० मोक्ष० प० याज्ञवल्क्यजनकसंवादेसप्तदशाधिकत्रिशततमोऽध्यायः॥ ३१७॥
याज्ञवल्क्यउवाच . अव्यक्तस्थंपरंयत्तत्पृष्टस्तेहंनराधिप॥ परंगुह्यमिमंप्रश्नंशृणुष्वावहितोनृप ॥ १ ॥ यथार्षेणेहविधिनाचरताऽवनतेनह॥ मयादित्याद
वाप्तानियजूंषिमिथिलाधिप॥ २॥ महतातपसादेवस्तपिष्णुःसेवितोमया॥ प्रीतेनचाहंविभुनासूर्येणोक्तस्तदानघ॥ ३॥ वरंवृणीष्वविप्रर्षेयदिष्टंतेसुदुर्लभं॥
तत्तेदास्यामिप्रीतात्मामत्प्रसादोहिदुर्लभः॥ ४॥ ततःप्रणम्यशिरसामयोक्तस्तपतांवरः॥ यजूंषिनोपयुक्तानिक्षिप्रमिच्छामिवेदितुं ॥ ५॥

॥ ७॥ अचलत्वेनप्रकृतेरन्यत्वंब्रह्मणः प्रतिपादयितुमारभते
लंअपरिणामि प्रकृतेरन्यदित्यर्थः ॥ २१ ॥ इतिशांति० मोक्ष० नै० भा० सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७ ॥
अव्यक्तस्थमिति अत्रअव्यक्तमव्याकृतंमायाशबलंहार्दाकाशइतिपर्यायास्त्रिगुणात्मकस्यकारणस्यब्रह्मणोवाचकाः चक्रेनाभिरिवश्रितेतिप्रयोगदर्शनात्तत्रविशिष्टेनिष्कृष्टंचक्रनाभिन्यायेनश्रितंवस्तुअव्य
क्तस्थं किमव्यक्तंपरंब्रह्मतस्माच्चपरतस्तुकिमितिपृष्टस्त्वयाहं ॥ १ ॥ निष्कलब्रह्मविद्यायादौर्लभ्यंगोप्यत्वंदेवताप्रसादप्राप्यत्वंचदर्शयितुमाख्यायिकामाह यथार्षेणेत्यादिना आदित्यानीमानिशुक्लानियजूंषिवाजसनेयेनयाज्ञवल्क्येनाख्यायंतइतिश्रुतेरादित्यप्रसादात्पंचदशशाखाद्रष्टुर्ममवचनमत्यंतंपथ्यंममापिगहनंचनिष्कलब्रह्मकथनमभूदित्याख्यायिकातात्पर्यं ॥ २॥ ३ ॥ ४ ॥ ५ ॥

॥ ६ ॥ मेस्यंममआस्यं संधिरार्षः ॥ ७ ॥ ८ ॥ शीतीभविष्यति त्वद्देहइतिशेषः ॥९॥ खिलंपरशाखीयंस्वशाखायामपेक्षावशात्पठ्यतेतत्खिलमित्युच्यते यथावह्वृचानांहिरण्यवर्णांहरिणीमितिश्रीसूक्तं सखिलंतत्सहितं सोत्तरंसोपनिषत्कं ॥ १० अपुनर्भावेमोक्षे ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ चक्रेकर्मकर्त्तरिप्रयोगः स्वयमेवाविरभूदित्यर्थः ॥ १६ ॥ मातुलस्यवैशंपायनस्य ॥ १७ ॥ १८ ॥

ततोमांभगवानाहवितरिष्यामितेद्विज॥ सरस्वतीहवाग्भूताशरीरंतेप्रवेक्ष्यति ॥ ६॥ ततोमामाहभगवानास्यंस्वंविवृतंकुरु ॥ विवृतंचततोमेस्यंप्रविष्टाचसरस्वती ॥ ७॥ ततोविदह्यमानोहंप्रविष्टोंऽभस्तदानघ॥ अविज्ञानादमर्षाच्चभास्करस्यमहात्मनः॥ ८॥ ततोविदह्यमानंमामुवाचभगवान्रविः॥ मुहूर्त्तंसह्यतांदाहस्ततःशीतीभविष्यति॥९॥ शीतीभूतंचमांदृष्ट्वाभगवानाहभास्करः॥ प्रतिष्ठास्यतितेवेदःसखिलःसोत्तरोद्विज॥१०॥ कृत्स्नंशतपथंचैवप्रणेष्यसिद्विजर्षभ॥ तस्यांतेचापुनर्भावेबुद्धिस्तवभविष्यति॥ ११ ॥ प्राप्स्यसेचयदिष्टंतत्सांख्ययोगेप्सितंपदं॥ एतावदुक्त्वाभगवानस्तमेवाभ्यवर्त्तत॥ १२॥ ततोनुव्याहृतंश्रुत्वागतेदेवेविभावसौ॥ गृहमागत्यसंहृष्टोऽचिंतयंवैसरस्वतीं॥ १३॥ ततःप्रवृत्तातिशुभास्वरव्यंजनभूषिता॥ ओंकारमादितःकृत्वाममदेवीसरस्वती॥ १४॥ ततोहमर्घ्यंविधिवत्सरस्वत्यैन्यवेदयं॥ तपतांचवरिष्ठायनिषण्णस्तत्परायणः॥ १५॥ ततःशतपथंकृत्स्नंसरहस्यंससंग्रहं॥ चक्रेसपरिशेषंचहर्षेणपरमेणह॥ १६॥ कृत्वाचाध्ययनंतेषांशिष्याणांशतमुत्तमं॥ विप्रियार्थंसशिष्यस्यमातुलस्यमहात्मनः॥ १७॥ ततःसशिष्येणमयासूर्येणेवगभस्तिभिः॥ व्यस्तोयज्ञोमहाराजपितुस्तवमहात्मनः॥ १८ ॥ मिषतोदेवलस्यापिततोर्धंकृतवानहं॥ स्ववेददक्षिणायार्थेविमर्देमातुलेनह॥१९॥ सुमंतुनाथपैलेनतथाजैमिनिनाचवै॥ पित्रातेमुनिभिश्चैवततोहमनुमानितः॥ २०॥ दशपंचचप्राप्तानियजूंष्यर्कान्मयानघ ॥ तथैवरोमहर्षणपुराणमवधारितं ॥ २१ ॥ बीजमेतत्पुरस्कृत्यदेवींचैवसरस्वतीं॥ सूर्यस्यचानुभावेनप्रवृत्तोहंनराधिप॥ २२॥ कर्तुंशतपथंचेदमपूर्वंचकृतंमया॥ यथाभिलषितंमार्गंतथातच्चोपपादितं॥ २३॥ शिष्याणामखिलंकृत्स्नमनुज्ञातंससंग्रहं॥ सर्वेचशिष्याःशुचयोगताःपरमहर्षिताः॥ २४॥ शाखाःपंचदशेमास्तुविद्याभास्करदेशिताः॥ प्रतिष्ठाप्ययथाकामंवेद्यंतदनुचिंतयम् ॥ २५॥ किमत्रब्रह्मण्यमृतंकिंचवेद्यमनुत्तमं ॥ चिंतयंस्तत्रचागत्यगंधर्वोमामपृच्छत॥ २६॥ विश्वावसुस्ततोराजन्वेदांतज्ञानकोविदः॥ चतुर्विंशांस्ततोपृच्छत्प्रश्नान्वेदस्यपार्थिव॥ २७॥

मिषतइति देवलस्यमातुलपक्षीयस्यमिषतःपश्यतःपुरस्तात् अर्थेअर्थनिमित्तंमातुलादिभिःसहविमर्देसतिसमंविभज्ययाह्यमितिनिर्बंधेसतिदेवलसंमत्याहंदक्षिणायाअर्धंकृतवान्स्वीकृतवानित्यर्थः दक्षिणायार्थेइतिसंधिरार्षः ॥ १९ ॥ २० ॥ २१ ॥२२॥ कर्त्तुंप्रकटीकर्त्तुं ॥२३॥२४॥२५॥ ब्रह्मण्यंब्राह्मणजातेर्हितं ॥२६॥ प्रष्टरिसत्यत्यंताभिनिवेशेनविचारेप्रवर्तंतेइतिदर्शयति विश्वावसुरित्यादिना ॥२७॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ बहवःपुरुषाब्रह्मन्निति पुरुषाणांस्रष्टापिपुरुषांतरंभ्रणमतीत्याश्चर्यं संघातादन्यःपुरुषोनास्तीतिभावः ॥ २३ ॥ २४ ॥ बहवःपुरुषाःपुत्रे
ति येसंघातात्मानस्त्वयाउदाहृताः एतदतिक्रांतंप्रत्यक्षेणैवापह्नतविषयंवेदाप्रतिपाद्यंनैतद्द्रष्टव्यंमित्यर्थः अनधिगतार्थज्ञापकंहिप्रमाणं आत्मभेदश्चाधिगतएवेतिनशास्त्रस्यविषयः तत्परत्वेग्निर्हिमस्यंभेषजमि
तिवत्शास्त्रस्यानुवादकत्वापत्तेः अतस्तत्त्वमस्यादिवाक्यंनगौणभेदपरमित्यर्थः ॥ २५ ॥ आधारोऽधिष्ठानं एकस्यविराजः सोपाधिकत्वेपिपुरुषस्यैकत्वमस्तिकिमुतनिरुपाधिकत्वेइतिभावः ॥ २६ ॥ वि

पितामहउवाच स्वागतंतेमहाबाहोदिष्ट्याप्राप्तोसिमेंतिकं ॥ कच्चित्तेकुशलंपुत्रस्वाध्यायतपसोःसदा ॥ १५ ॥ नित्यमुग्रतपास्त्वंहिततःपृच्छामितेपुनः ॥
॥ १६ ॥ रुद्रउवाच त्वत्प्रसादेनभगवन्स्वाध्यायतपसोर्मम ॥ कुशलंचाव्ययंचैवसर्वस्यजगतस्तथ ॥ १७ ॥ चिरदृष्टोहिभगवान्वैराजंसदनेमया ॥ ततोहं
पर्वतंप्राप्तस्त्विमंत्वत्पादसेवितं ॥ १८ ॥ कौतूहलंचापिहिमेएकांतगमनेनने ॥ नैतत्कारणमल्पंहिभविष्यतिपितामह ॥ १९ ॥ किंनुतत्सदनंश्रेष्ठंक्षुत्पिपासावि
वर्जितं ॥ सुरासुरैरध्युषितंऋषिभिश्चामितप्रभैः ॥ २० ॥ गंधर्वैरप्सरोभिश्चसततंसंनिषेवितं ॥ उत्सृज्येमंगिरिवरमेकाकीप्राप्तवानसि ॥ २१ ॥ ब्रह्मोवाच
वैजयंतोगिरिवरःसततंसेव्यतेमया ॥ अत्रैकाग्रेणमनसापुरुषश्चिंत्यतेविराट् ॥ २२ ॥ रुद्रउवाच बहवःपुरुषाब्रह्मंस्त्वयासृष्टाःस्वयंभुवा ॥ सृज्यंतेचा
परेब्रह्मन्सचैकःपुरुषोविराट् ॥ २३ ॥ कोह्यसौचिंत्यतेब्रह्मंस्त्वयैकःपुरुषोत्तमः ॥ एतन्मेसंशयंब्रूहिमहत्कौतूहलंहिमे ॥ २४ ॥ ब्रह्मोवाच बहवःपुरुषाः
पुत्रत्वयासमुदाहृताः ॥ एवमेतदतिक्रांतंद्रष्टव्यंनैवमित्यपि ॥ २५ ॥ आधारंतुप्रवक्ष्यामिएकस्यपुरुषस्यते ॥ बहूनांपुरुषाणांसयथैकायोनिरुच्यते ॥ २६ ॥
तथातंपुरुषंविश्वंपरमंसुमहत्तमं ॥ निर्गुणंनिर्गुणाभूत्वाप्रविशंतिसनातनं ॥ २७ ॥ इतिश्रीमहाभारतेशां०मोक्ष०प०नारायणीयेब्रह्मरुद्रसंवादेपंचा
शदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥ ब्रह्मोवाच शृणुपुत्रयथाह्येषपुरुषःशाश्वतोव्ययः ॥ अ
क्षयश्चाप्रमेयश्चसर्वगश्चनिरुच्यते ॥ १ ॥ नसशक्यस्त्वयाद्रष्टुंमयान्यैर्वापिसत्तम ॥ सगुणैर्निर्गुणैर्विश्वोज्ञानदृश्योह्यसौस्मृतः ॥ २ ॥

श्वंविराजं परमंसूत्रात्मानं सुमहत्तमंकारणं निर्गुणंशुद्धं अनेनानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाःक्रमेणोक्ताः तत्रनिर्गुणस्यैवनिर्गुणेवासुदेवेप्रवेशइत्यर्थः ॥ २७ ॥ इतिशांतिपर्वणिमोक्ष०प०पंचा
शदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥ ॥ ९ ॥ ॥ ९ ॥ ॥ ९ ॥ इदमेवपुरुषैकत्वंदृष्टांतैरुपपादयन्कृत्स्नस्यमोक्षशास्त्रस्यार्थमुपसंहरति शृणुपुत्रेत्यादिना पुरुषः
पूर्णत्वात् शाश्वतःआद्यंतशून्यत्वात् अव्ययःअपरिणामित्वात् अतएवअक्षयःअप्रमेयः [illegible] सर्वगःसर्वोपादानत्वात् ॥ १ ॥ सगुणैःबुद्धीन्द्रियादिसहितैः निर्गुणैःशमादिहीनैर्मूढैः
विश्वोविश्वात्मा [illegible] स्वयंप्रकाशः [illegible] ॥ २ ॥

अशरीरः स्थूलसूक्ष्मकारणशरीरैर्विरहितः नलिप्यति न लिप्यते आकाशइवघटांतर्गतैर्दोषैर्दत्तत्वादिभिर्गत्यादिभिर्वा ॥ ३ ॥ अस्यतटस्थतांवारयति ममेति अंतरात्माप्यनपायः उपाध्यभिनिवेशात् ॥ ४ ॥
अयमेवविश्वरूपइत्याह विश्वेति सर्वेषांशरीरैरयमेवशरीरीत्यर्थः ॥ ५ ॥ अस्यैवक्षेत्रज्ञत्वंसनिरुक्तमाह क्षेत्राणीति ॥ ६ ॥ नन्वयमेवक्षेत्रज्ञश्चेदुत्क्रांतिगत्यागत्यादिकमस्यैवप्रसक्तमित्याशंक्याह नागतिरि
ति घटाकाशस्यैवाप्रतीतितोऽमत्यादिमत्त्वेपिवस्तुतोनैवास्ति अतोनैवसाज्ञेया आत्मनिगतिरस्तीतिनज्ञातव्यमित्यर्थः ॥ ७ ॥कातर्हिगतिप्रतीतेर्गतिरित्याशंक्यानिर्वचनीयास्मिन्गतिप्रतीतिरित्याह चिंतयामी
ति गतेर्निर्वचनंसत्त्वेनासत्त्वेनवादुर्निरूपं पुरुषंयथाज्ञानंश्रुतियुक्त्यनुभूतीरनतिक्रम्यवक्ष्यामि यतःसनातनंनित्यैकरूपं यद्भिनानारूपंतदिदमित्थमेवेतिदुर्निरूपमित्यर्थः ॥ ८ ॥ अस्यमहापुरुषत्वंनिर्वक्ति
तस्येति पुरुषांतरसत्त्वेएकस्यमहत्त्वंनस्यात् समत्वात्पुरुषाणां ॥ ९ ॥ ननुक्लेशादिभिरपरामृष्टईश्वरइतियोगावदंतिसचमहानित्याशंक्यैकस्यैवोपाध्यावेशात्संसारस्तटस्थेश्वरस्यपूर्वमेवनिरस्तत्वादित्याश

अशरीरःशरीरेषुसर्वेषुनिसवत्यसौ ॥ वसन्नपिशरीरेषुनसलिप्यतिकर्मभिः ॥ ३ ॥ ममांतरात्मातवचयेचान्येदेहसंज्ञिताः ॥ सर्वेषांसाक्षिभूतोसौनग्राह्यःके
नचित्क्वचित् ॥ ४ ॥ विश्वमूर्धाविश्वभुजोविश्वपादाक्षिनासिकः ॥ एकश्चरतिक्षेत्रेषुस्वैरचारीयथासुखं ॥ ५ ॥ क्षेत्राणिहिशरीराणिबीजंचापिशुभाशुभं ॥
तानिवेत्तिसयोगात्माततःक्षेत्रज्ञउच्यते ॥ ६ ॥ नागतिर्नगतिस्तस्यज्ञेयाभूतेषुकेनचित् ॥ सांख्येनविधिनाचैवयोगेनचयथाक्रमं ॥ ७ ॥ चिंतयामिगतिंचा
स्यनगतिंवेद्मिचोत्तरां ॥ यथाज्ञानंतुवक्ष्यामिपुरुषंतुसनातनं ॥ ८ ॥ तस्यैकत्वंमहत्त्वंचसचैकःपुरुषःस्मृतः ॥ महापुरुषशब्दंसबिभर्त्येकःसनातनः ॥ ९ ॥
एकोहुताशोबहुधासमिध्यतेएकःसूर्यस्तपसोयोनिरेका ॥ एकोवायुर्बहुधावातिलोकेमहोदधिश्चांभसांयोनिरेकः ॥ पुरुषश्चैकोनिर्गुणोविश्वरूपस्तंनिर्गुणं
पुरुषंचाविशंति ॥ १० ॥ हित्वागुणमयंसर्वंकर्महित्वाशुभाशुभं ॥ उभेसत्यानृतेत्यक्त्वाएवंभवतिनिर्गुणः ॥ ११ ॥

येनाह एकइति आद्योदृष्टांतउपाधितादात्म्येज्ञेयः द्वितीयस्त्वौपाधिकधर्माणामुपहितेप्रतिबिंबेजलचांचल्यवत्प्रतीतावसंगित्वेप्युपाधिप्रकाशकत्वेच तपसःप्रकाशस्य श्रुतौतु एकएवाग्निर्बहुधासमिद्धएकः
सूर्योविश्वमनुप्रभूतः एकैवोषाःसर्वमिदंविभात्येकंवाइदंविबभूवसर्वमिति दृष्टांतत्रयंपृथगुक्तं सर्वेप्येकस्यानेकत्वेदृष्टांताएते वायुदृष्टांतोप्यसंगत्वएव समुद्रदृष्टांतस्तूत्पत्तिलयस्थानत्वेइतिविवेकः दृष्टांतानु
कादार्ष्टांतिकमाहार्धेन पुरुषश्चेति निर्गुणोपिमाययाविश्वरूपोभवति विश्वानिचरूपाणितमेवाविशंति समुद्रादुद्भूताआपःसमुद्रमिवेत्यर्थः ॥ १० ॥कदानिर्गुणंपुरुषंविशंतीत्यतआह हित्वेति गुणमयंदेहेंद्रिया
यहंकारांतंहित्वातद्धानाच्चशुभाशुभंकर्मत्यक्त्वाततःसत्यानृतेसत्यमक्षरंजीवाख्यंअनृतंप्रधानं भोक्तारंभोग्यंचत्यक्त्वेत्यर्थः क्षरंप्रधानममृताक्षरंहरःक्षरात्मानावीशतेदेवएकइति अमृतोक्षरइतिवक्तव्येअमृता
[illegible] ॥ ११ ॥

* इदंचभाष्यविरुद्धं तत्रअमृतंचतदक्षरंचेतिविग्रहपूर्वकंव्याख्यानात्

तन्निर्गुणमचिंत्यमवोतीतं ज्ञात्वा साक्षात्कृत्य चतुष्टयं भावसूक्ष्मं विचरेत् भावस्य सत्तामात्रस्य सूक्ष्मं सूक्ष्मरूपभूतं चतुष्टयमनिरुद्धप्रद्युम्नसंकर्षणवासुदेवापरपर्यायमधिदैवं विराट्सूत्रांतर्यामिशुद्धब्रह्मरूपमध्यात्मं विश्वतैजसप्राज्ञतुरीयसंज्ञमवस्थाचतुष्टयं यः संचरेत् स्थूलसूक्ष्मप्रविलापनक्रमेण योनित्यं समाधिमनुतिष्ठेदित्यर्थः तस्य लक्षणं असमुन्नद्धः अत्यंतशांतः सएवपरमं पुरुषं गच्छेन्नान्य इत्यर्थः ॥ १२ ॥ एवं योगमार्गेण केचित् योगाः अपरे सांख्याः आत्मानमन्यं च मेकात्मानं ब्रह्माभिन्नमिच्छंति ॥ १३ ॥ पक्षद्वयेपि परमात्मशब्दार्थमाह सार्धेन तत्रेति ॥ १४ ॥ आत्मशब्दार्थमाह कर्मेति ॥ १५ ॥ सप्तदशकेन राशिना लिंगशरीरेण सः सोपाधिरात्मा जीवः सच कर्मभेदाद्देवतिर्यगादिभावमापन्नो बहुविध इत्याह एवमिति एवमौपाधिके पुरुषबहुत्वे सति येत्वत एव पुंबहुत्वं प्राहुर्निरीश्वरसांख्यादयस्ते भ्रांता इत्यर्थः ॥ १६ ॥ एवं बहवः पुरुषा राजन्नुताहो एक एवचेत्यस्य प्रश्नस्योत्तरं सिद्धांते पुरुषैक्यमुक्तं संप्रति ब्रह्मविद्यासमाप्तौ मंगलार्थं तदेवानुसंदधानो भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदिति श्रुतेरर्थं भोक्तृभोग्ययोर्ब्रह्माभेदं दर्शयति यत्तदि

अचिंत्यं चापि तं ज्ञात्वा भावसूक्ष्मं चतुष्टयं ॥ विचरेद्योऽसमुन्नद्धः सगच्छेत्पुरुषं प्रभुं ॥ १२ ॥ एवं हि परमात्मानं केचिदिच्छंति पंडिताः ॥ एकात्मानं तथात्मानम परे ज्ञानचिंतकाः ॥ १३ ॥ तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृतः ॥ स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥ १४ ॥ न लिप्यते फलैश्चापि पद्मपत्रमिवांभसा ॥ कर्मात्मा त्वपरो योसौ मोक्षबंधैः स युज्यते ॥ १५ ॥ स सप्तदशकेनापि राशिना युज्यते च सः ॥ एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमं ॥ १६ ॥ यत्तत्कृत्स्नं लोकतंत्रस्य धाम वेद्यं परं बोधनीयः स बोद्धा ॥ मंता मंतव्यं प्राशिता प्राशनीयं घ्राता घ्रेयं स्पर्शिता स्पर्शनीयं ॥ १७ ॥ द्रष्टा द्रष्टव्यं श्राविता श्रवणीयं ज्ञाता ज्ञेयं सगुणं निर्गुणं च ॥ यद्वै प्रोक्तं तात सम्यक्प्रधानं नित्यं चैतच्छाश्वतं चाव्ययं च ॥ १८ ॥ यद्वै सूते धातुराद्यं विधानं तद्वै विप्राः प्रवदंते निरुद्धं ॥ यद्वै लोके वैदिकं कर्म साधु आशीर्युक्तं तद्धि तस्यैव भाव्यं ॥ १९ ॥ देवाः सर्वे मुनयः साधु शांतास्तं प्राग्वंशे यज्ञभागं भजंते ॥ अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः ॥ २० ॥

त्यादिना धाम प्रकाशकं चिज्ज्योतिः तदेव परं वेद्यं तदेव च बोद्धा यो यं बोद्धा जीवः स एव बोधनीय ईश्वर इत्यर्थः यथोक्तं वृद्धैः अन्वेष्टव्यात्मविज्ञानात्प्राक्प्रमातृत्वमात्मनः अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जित इति न केवलं आत्मन एव मंतृमंतव्यत्वादिकं अपितु घ्रेयत्वादिकमपि तस्यैवेत्याह घ्रातेत्यादिना ॥ १७ ॥ किंबहुना यत्प्रधानं अनात्मत्वेन प्रसिद्धं घ्रेयादीनामुपादानं तदपि आत्मैवेत्याह यद्वै प्रोक्तमिति यत्प्रधानमिति प्रोक्तं यदपि धातुः आद्यं विधानं महत्तत्वं सूते तदपि एतदेवेत्यन्वयः एतदेव विशिनष्टि नित्यं ध्वंसहीनं अत एव शाश्वतं अनादि अव्ययं अपरिणामि परिणामि बोद्धि विकारवत्त्वादायंतवत्त्वं प्रधानस्य युज्यते न त्वतादृशस्य पुरुषस्य ॥ १८ ॥ तदेवं परेषां महत्तत्वेनाभिमतं विप्राः पूर्वज्ञाना ... अनिरुद्धं महंकारत्वेन ... अयं वैदिककर्मणामधिष्ठाता देवेत्याह यद्वै लोक इति आशीर्युक्तं काम्यं तस्यैव तादर्थ्येनैव भाव्यं चिंतनीयं अनेनाधिदैवं अनिरुद्धात्मा वासुदेवः ... ॥ १९ ॥ ... देवा इत्यादिना ॥ २० ॥

र्जीवैराराधनीयेत्यर्थः ॥२१॥ पांचरात्रमार्गमुपसंहरति चतुर्विभक्तइति चतुर्विभक्तः चतुर्धा वासुदेवादिरूपेण विभक्तः क्रीडति शास्यशासितृभावेन
मत्तइति मम आराध्यादेवतामज्ञैरपिस्थावरजंगमात्मकैः [illegible] नस्वेनस्वरूपाभिन्नेनज्ञानेनप्रतिबोधितःसन्जीवत्वंपरित्यज्यब्रह्मैवभवतीत्यर्थः [illegible] चतुर्विभक्तइत्युपसंहारोनयुज्यते पांचरात्रस्य
भोग्यभोक्तृभावेनचेत्यर्थः एवंसभगवान्वासुदेवउपाध्यायशा[illegible]
तस्यावैदिकस्यश्रौतेसांख्ययोगमतेऽनुपसंहार्यत्वादितिचेत् कृत्स्नभावादितिब्रूमः तथाहि भगवदाराधनंविनासंन्यासपूर्वकंसांख्यमनुतिष्ठतश्चित्तैकाग्र्यस्याभावाद्बुद्धिर्भ्रंश्यतिततश्चारूढपतितास्तेउभयभ्रष्टा
भवंति यथोक्तंश्रीभागवते श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यंतियेकेवलबोधलब्धये तेषामसौक्लेशलएवशिष्यतेनान्यद्यथास्थूलतुषावघातिनां येन्येरविंदाक्षविमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः
आरुह्यकृच्छ्रेणपरंपदंततःपतंत्यधोनादृतयुष्मदंघ्रयइति यथायोगिनामपिप्रत्यक्त्वाधिगमोंतरायाभावश्चनभगवदाराधनंविनाभवतीतिस्मर्यते ततःप्रत्यक्चेतनाधिगमोंतरायाभावश्च अंतरायास्तुयोगैरेवोक्ताः
व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रांतिदर्शनालब्धभूमिकात्वानवस्थितत्वानिचित्तविक्षेपास्तेंऽतरायाः दुःखदौर्मनस्यांगमेजयत्वश्वासप्रश्वासाविक्षेपसहभुवइति तथानतेमाधवतावकाःकचिद्भ्रश्यंति

मत्तोजगज्जंगमंस्थावरंचसर्वेवेदाःसरहस्याहिपुत्र ॥ २१ ॥ चतुर्विभक्तःपुरुषःसक्रीडतियथेच्छति ॥ एवंसभगवान्स्वेनज्ञानेनप्रतिबोधितः ॥ २२ ॥ एतत्ते कथितंपुत्रयथावदनुपृच्छतः ॥ सांख्यज्ञानेतथायोगेयथावदनुवर्णितं ॥२३॥ इतिश्रीम० शांति० मोक्ष० प० नारायणीयसमाप्तौएकपंचाशदधिकत्रिशतत मोऽध्यायः॥ ३५१ ॥ ॥ ५ ॥ युधिष्ठिरउवाच धर्माःपितामहेनोक्तामोक्षधर्माश्रिताःशुभाः ॥ धर्ममाश्रमिणांश्रेष्ठंवक्तुमर्हतिमेभवान् ॥ ॥ १ ॥ भीष्मउवाच सर्वत्रविहितोधर्मःस्वर्गःसत्यफलंमहत् ॥ बहुद्वारस्यधर्मस्यनेहास्तिविफलाक्रिया ॥ २ ॥

मार्गास्त्वयिबद्धसौहृदाः त्वयाभिगुप्ताविचरंतिनिर्भयाविनायकानीकपमूर्धसुप्रभोइति तस्माद्भक्तौकृत्स्नस्यशास्त्रफलस्यांतर्भावोस्तिअतस्तयैवोपसंहारोयुक्तः ॥ २२ ॥ परमप्रकृतौसांख्ययोगावुपसंहरति
एतत्तइति तथाचज्ञानस्यैवप्राकरणिकत्वात्तत्प्रकरणेपठिताभक्तिस्तदंगभावंभजतइतिभावः तथाचोक्तंभगवता भक्त्यामामभिजानातीति श्रुतिरपि यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाः
प्रकाशंतेमहात्मनइतिभक्तेर्ज्ञानांगत्वंदर्शयति तदयंसंग्रहः कर्मभिर्भगवद्भक्तिर्भक्त्येश्वरकृपातया ज्ञानंतेनविमुक्तिश्चमोक्षधर्मार्थसंग्रहः ॥२३॥ इतिशांति० मोक्ष० प० नैलकंठीयेभारतभावदीपेएकपंचाशद
धिकत्रिशततमोऽध्यायः ॥ ३५१ ॥ ॥ ५ ॥ यद्यपिसुलभाजनकसंवादेसंन्यासस्यैवश्रैष्ठ्यंस्थितं तथापिसर्वैःप्रकारैःसुखहेतुत्वेनश्रेष्ठतरःकोवाआश्रमइतिजिज्ञासयापृच्छति धर्माइति आश्रमिणां
आश्रमवतांमध्येश्रेष्ठंप्रशस्यतमंधर्मंआश्रमधर्मंवक्तुमर्हतिभवान् अयंभावः संन्यासःश्रेष्ठोपितद्धर्माणामत्यंतंदुरनुष्ठेयत्वात् यथोक्तंतत्रैवसुलभाजनकसंवादे आधिपत्येतथातुल्येनिग्रहानुग्रहात्मके राजभि
भिक्षुकास्तुल्यामुच्यंतेकेनहेतुनेति तत्रारूढपातित्यंकलौसंभावितमतोनशयानःपतत्यधइतिन्यायेनयत्रपातित्यंनास्तिऊर्ध्वगतिश्चसर्वैःप्रकारैःसंभाव्यतेतादृशआश्रमःप्रशस्ततरःकइतिप्रष्टुरभिप्रायइति ॥ १ ॥
सर्वत्राश्रमेषुविहितोधर्मः स्वर्गःस्वर्गसाधनंसत्यफलंअबाधितमोक्षाख्यफलसाधनंचभवति साधनेसाध्योपचारः बहूनियज्ञदानादीनिद्वाराणियस्य ॥ २ ॥

यस्मिन्निति सर्वेष्वाश्रमेषुस्वर्गोमोक्षश्चास्तितेषुयत्रयस्यरुचिस्तेनसत्कृतकृत्योनान्यंधर्मंबहुमन्यतेइतिश्लोकद्वयमर्थः ॥३॥ एवंसत्यपिन्यायागतधनस्यगृहस्थस्यश्रेष्ठतमत्वंप्रतिपादयितुमुंछवृत्त्युपाख्यानमा

यस्मिन्यस्मिंश्चविषयेयोयोयातिविनिश्चयं ॥ सतमेवाभिजानातिनान्यंभरतसत्तम ॥ ३ ॥ इमांचत्वंनरव्याघ्रश्रोतुमर्हसिमेकथां ॥ पुराशक्रस्यकथितांना
रदेनमहर्षिणा ॥ ४ ॥ महर्षिर्नारदोराजन्सिद्धस्त्रैलोक्यसंमतः ॥ पर्येतिक्रमशोलोकान्वायुरव्याहतोयथा ॥ ५ ॥ सकदाचिन्महेष्वासदेवराजालयंगतः ॥ स
त्कृतश्चमहेंद्रेणप्रत्यासन्नगतोभवत् ॥ ६ ॥ तंकृतक्षणमासीनंपर्यपृच्छच्छचीपतिः ॥ महर्षेकिंचिदाश्चर्यमस्तिदृष्टंत्वयानघ ॥ ७ ॥ यदात्वमपिविप्रर्षेत्रैलोक्यंस
चराचरं ॥ जातकौतूहलोनित्यंसिद्धश्चरसिसाक्षिवत् ॥ ८ ॥ नह्यस्त्यविदितंलोकेदेवर्षेतववकिंचन ॥ श्रुतंवाप्यनुभूतंवादृष्टंवाकथयस्वमे ॥ ९ ॥ तस्मैराजन्सुरेंद्रा
यनारदोवदतांवरः ॥ आसीनायोपपन्नायप्रोक्तवान्विपुलांकथां ॥ १० ॥ यथायेनचकल्पेनसतस्मैद्विजसत्तमः ॥ कथांकथितवान्पृष्टस्तथात्वमपिमेशृणु ॥
॥ ११ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० प० उंछवृत्त्यु० द्विपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥ ॥ छ ॥ भीष्मउवाच आसीत्किलनरश्रेष्ठमहा
पद्मेपुरोत्तमे ॥ गंगायादक्षिणेतीरेकश्चिद्विप्रःसमाहितः ॥ १ ॥ सौम्यःसोमान्वयेवेदेगताध्वाछिन्नसंशयः ॥ धर्मनित्योजितक्रोधोनित्यतृप्तोजितेंद्रियः ॥ २ ॥
तपःस्वाध्यायनिरतःसत्यःसज्जनसंमतः ॥ न्यायप्राप्तेनवित्तेनस्वेनशीलेनचान्वितः ॥ ३ ॥ ज्ञातिसंबंधिविपुलेसत्वाद्याश्रयसंमिते ॥ कुलेमहतिविख्यातेविशि
ष्टांवृत्तिमास्थितः ॥ ४ ॥ सपुत्रान्बहुलान्दृष्ट्वाविपुलेकर्मणिस्थितः ॥ कुलधर्माश्रितोराजन्धर्मचर्यास्थितोभवत् ॥ ५ ॥ ततःसधर्मंवेदोक्तंतथाशास्त्रोक्तमेवच ॥
शिष्टाचीर्णंचधर्मंचत्रिविधंचिंत्यचेतसा ॥ ६ ॥ किन्नुमेस्याच्छुभंकृत्वाकिंकृतंकिंपरायणं ॥ इत्येवंखिद्यतेनित्यंनचयातिविनिश्चयं ॥ ७ ॥ तस्यैवंखिद्यमान
स्यधर्मंपरममास्थितः ॥ कदाचिदतिथिःप्राप्तोब्राह्मणःसुसमाहितः ॥ ८ ॥ सतस्मैसत्क्रियांचक्रेक्रियायुक्तेनहेतुना ॥ विश्रांतंसुसमासीनमिदंवचनमब्रवीत् ॥
॥ ९ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० प० उंछवृत्त्युपाख्यानेत्रिपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥ ॥ छ ॥

रभते इमांचत्वंनरव्याघ्रेत्यादिना ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ इतिशांति० मो० नै० भा० द्विपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥ ॥ छ ॥ ॥ छ ॥
आसीदिति ॥ १ ॥ सोमान्वयेअत्रिगोत्रे गताध्वाज्ञातमार्गः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ इतिशांति० मो० नै० भा० त्रिपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥ ॥ छ ॥

मत्तइति मम आराध्याइवनाम... ...नीबंधमरज्जुः अश्वाभिधानीमादर नहइतिब्राह्मणात तेनाभिधानशब्दोपिबंधनवाची जातबंधनइत्यर्थः ॥ १ ॥ २ ॥ आत्मानंअवस्थायआलंब्यएकएवआत्मनिस्थितिंआत्मज्ञानार्थंमे ...कुतोधर्ममयःप्लवः कुतःकुत्राश्रमे प्लवःसंसारा काकितयास्थातुंसंन्यासंकर्तुमिच्छामि गुणैर्विषयपाशैर्निबद्धश्चतनच्छामि यथानदीग्रबद्धाहारकामयानाप्यादयदाषणओकुनेच्छा।ततद्वदित्यर्थः ॥ ३ ॥ ४ ॥

ब्राह्मणउवाच समुत्पन्नाभिधानोस्मिवाङ्माधुर्येणतेनघ ॥ मित्रत्वमभिपन्नस्त्वंकिंचिद्वक्ष्यामितच्छृणु ॥ १ ॥ गृहस्थधर्मं विप्रेंद्रकृत्वापुत्रगतंत्वहं ॥ धर्मंप रमकंकुर्याकोहिमार्गोभवेद्द्विज ॥ २ ॥ अहमात्मानमास्थायएकएवात्मनिस्थितिं ॥ कर्तुकांक्षान्नेच्छामिबद्धःसाधारणैर्गुणैः ॥ ३ ॥ यावदेतदतीतंमेवयःपु त्रफलाश्रितं ॥ तावदिच्छामिपाथेयमादातुंपारलौकिकं ॥ ४ ॥ अस्मिन्हिलोकसंभारेपरंपारमभीप्सतः ॥ उत्पन्नामेमतिरियंकुतोधर्ममयःप्लवः ॥ ५ ॥ संयुज्य मानानिनिशम्यलोकेनिर्यात्यमानानिचसात्विकानि ॥ दृष्ट्वातुधर्मध्वजकेतुमालांप्रकीर्यमाणामुपरिप्रजानां ॥ ६ ॥ नममनोरज्यतिभोगकालेदृष्ट्वायतींन्प्रा र्थयतःपरत्र ॥ तेनातिथेबुद्धिबलाश्रयेणधर्मेणधर्मेविनियुंक्ष्वमांत्वं ॥ ७ ॥ सोतिथिर्वचनंतस्यश्रुत्वाधर्माभिभाषिणः ॥ प्रोवाचवचनंश्लक्ष्णंप्राज्ञोमधुरया गिरा ॥ ८ ॥ अतिथिरुवाच अहमप्यत्रमुह्यामिममाप्येषमनोरथः ॥ नचसंनिश्चयंयामिबहुद्वारेत्रिविष्टपे ॥ ९ ॥ केचिन्मोक्षंप्रशंसंतिकेचिद्यज्ञफलंद्वि जाः ॥ वानप्रस्थाश्रयाःकेचिद्गार्हस्थ्यंकेचिदास्थिताः ॥ १० ॥ राजधर्माश्रयंकेचित्केचिदात्मफलाश्रयं ॥ गुरुधर्माश्रयंकेचित्केचिद्वाक्संयमाश्रयं ॥ ११ ॥ मातरंपितरंकेचिच्छुश्रूषंतोदिवंगताः ॥ अहिंसयापरेस्वर्गंसत्येनचतथापरे ॥ १२ ॥ आहवेभिमुखाःकेचिन्निहतास्त्रिदिवंगताः ॥ केचिदुंछव्रतैःसिद्धाःस्वर्ग मार्गसमाश्रिताः ॥ १३ ॥ केचिदध्ययनेयुक्तावेदव्रतपराःशुभाः ॥ बुद्धिमंतोगताःस्वर्गंतुष्टात्मानोजितेंद्रियाः ॥ १४ ॥ आर्जवेनापरेयुक्तानिहतानार्जवैर्ज नैः ॥ ऋजवोनाकपृष्ठेवैशुद्धात्मानःप्रतिष्ठिताः ॥ १५ ॥ एवंबहुविधैर्लोकेधर्मद्वारैरनावृतैः ॥ ममापिमतिराविग्नामेघलेखेववायुना ॥ १६ ॥ इतिश्रीम हाभारतेशांति० मोक्ष० प० उंछवृत्त्युपाख्यानेचतुःपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥ ॥ ७ ॥

धर्मस्ययमस्यध्वजाःकेतवःपताकादंडोपमारोगाद्यस्तेषांमा ब्धितरणसाधनं ॥ ५ ॥ धर्मप्लवापेक्षायांहेतुमाह संयुज्यमानानीति निशम्यआलोच्य निर्यात्यमानानिनिपीड्यमानानि सात्विकानिदेवादीनि धर्मस्ययमस्यध्वजाःकेतवःपताकादंडोपमारोगाद्यस्तेषांमा लासंततिस्तांदृष्ट्वामेमनोभोगकालेनरज्यतीत्युत्तरेणसंबंधः ॥ ६ ॥ तर्हिकिंभोगत्यागेरज्यतिनेत्याह यतीनृपरिव्राजकानपिपरत्रगृहेवस्त्रान्नादिकंप्रार्थयतःप्रार्थयमानानदृष्ट्वाचयतिधर्मेपिमेमनोनरज्यति अतःदोलायमानंमांधर्मेनियुंक्ष्व ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ इतिशांति० मो० नै० भा० चतुष्पंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५४ ॥ ॥ ७ ॥

उपदेशंत्विति ॥ १ ॥ २ ॥ ३ ॥ चक्षुःश्रवाः सर्पः ॥ ४ ॥ त्रिविधेकर्मज्ञानोपास्त्यात्मके ॥ ५ ॥ चक्षुःचक्षुरादि ध्यानेनवस्तुतत्त्वानुसंधानेन ॥ ६ ॥ अतिक्रम्यउपगम्य ॥ ७ ॥ आभिकामिकैः अभीप्सितैः ॥

अतिथिरुवाच उपदेशंतुतेविप्रकरिष्येहंयथाक्रमं ॥ गुरुणामेयथाख्यातमर्थतत्त्वंतुमेशृणु ॥ १ ॥ यत्रपूर्वाभिसर्गेवैधर्मचक्रंप्रवर्त्तितं ॥ नैमिषेगोमतीतीरे
तत्रनागाव्हयंपुरं ॥ २ ॥ समग्रैस्त्रिदशैस्तत्रइष्टमासीद्द्विजर्षभ ॥ यत्रेंद्रातिक्रमंचक्रेमांधाताराजसत्तमः ॥ ३ ॥ कृताधिवासोधर्मात्मातत्रचक्षुःश्रवामहान् ॥ प
द्मनाभोमहानागःपद्मइत्येवविश्रुतः ॥ ४ ॥ सवाचाकर्मणाचैवमनसाचद्विजर्षभ ॥ प्रसादयतिभूतानित्रिविधेवर्त्मनिस्थितः ॥ ५ ॥ साम्नाभेदेनदानेनदंडेने
तिचतुर्विधं ॥ विषमस्थंसमस्थंचचक्षुर्ध्यानेनरक्षति ॥ ६ ॥ तमतिक्रम्यविधिनाप्रष्टुमर्हसिकांक्षितं ॥ सतेपरमकंधर्मंनमिथ्यादर्शयिष्यति ॥ ७ ॥ सहिसर्वाति
थिर्नागोबुद्धिशास्त्रविशारदः ॥ गुणैरनुपमैर्युक्तःसमस्तैराभिकामिकैः ॥ ८ ॥ प्रकृत्यानित्यसलिलोनित्यमध्ययनेरतः ॥ तपोदमाभ्यांसंयुक्तोवृत्तेनानवरेणच
॥ ९ ॥ यज्वादानपतिःक्षांतोवृत्तेचपरमेस्थितः ॥ सत्यवागनसूयुश्चशीलवान्नियतेंद्रियः ॥ १० ॥ शेषान्नभोक्तावचनानुकूलोहितार्जवोत्कृष्टकृताकृतज्ञः ॥ अ
वैरकृद्भूतहितेनियुक्तोगंगाह्रदांभोभिजनोपपन्नः ॥ ११ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० प० उंछवृत्तु० पंचपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥
ब्राह्मणउवाच अतिभारोद्यतस्यैवभारावतरणंमहत् ॥ पराश्वासकरंवाक्यमिदंमेभवतःश्रुतं ॥ १ ॥ अध्वक्लांतस्यशयनंस्थानक्लांतस्यचासनं ॥ तृषितस्य
चपानीयंक्षुधार्त्तस्यचभोजनं ॥ २ ॥ ईप्सितस्येवसंप्राप्तिरन्नस्यसमयेतिथेः ॥ एषितस्यात्मनःकालेवृद्धस्यैवसुतोयथा ॥ ३ ॥ मनसाचिंतितस्येवप्रीतिस्निग्ध
स्यदर्शनं ॥ प्रल्हादयतिमांवाक्यंभवतायदुदीरितं ॥ ४ ॥ दत्तचक्षुरिवाकाशेपश्यामिविमृशामिच ॥ प्रज्ञानवचनाद्योयमुपदेशोहिमेकृतः ॥ ५ ॥ बाढमेवंक
रिष्यामियथामेभाषतेभवान् ॥ इमांहिरजनींसाधोनिवसस्वमयासह ॥ ६ ॥ प्रभातेयास्यतिभवान्पर्याश्वस्तःसुखोषितः ॥ असौहिभगवान्सूर्योमंदरश्मिर
वाङ्मुखः ॥ ७ ॥ भीष्मउवाच ततस्तेनकृतातिथ्यःसोतिथिःशत्रुसूदन ॥ उवासकिलतांरात्रिंसहतेनद्विजेनवै ॥ ८ ॥ चतुर्थधर्मसंयुक्तंतयोःकथयतोस्तदा ॥
व्यतीतासानिशाकृत्स्नासुखेनदिवसोपमा ॥ ९ ॥

॥ ८ ॥ नित्यंसलिलवन्निर्मलोनित्यसलिलः ॥ ९ ॥ १० ॥ ११ ॥ इतिशांति० मो० नै० भा० पंचपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५५ ॥ ॥ ७ ॥ ॥ ५ ॥ ॥ ७ ॥
॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ चतुर्थधर्मोमोक्षधर्मस्तेनसंयुक्तं ॥ ९ ॥ * चतुर्विधंयथाख्यातथांप्रसादयतीतिपूर्वेणान्वयः

मत्तइति मम आराध्यादेवतैः ॥ इतिशांति० मो० नै० भा० पट्पंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५६ ॥ ॥ ७ ॥ सवनानीति ॥ १ ॥२ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८० ॥ विवासकरणंप्रवासकर

ततःप्रभातसमयेसोतिथिस्तेनपूजितः ॥ ब्राह्मणेनयथाशक्त्यास्वकार्यमभिकांक्षता ॥ १० ॥ ततःसविप्रःकृतकर्मनिश्चयःकृताभ्यनुज्ञःस्वजनेनधर्मकृत् ॥ य

थोपदिष्टंभुजगेंद्रसंश्रयंजगामकालेसुकृतैक निश्चयः ॥ ११ ॥ इतिश्रीम० शां० मोक्ष० प० उंछवृत्त्युपाख्यानेपट्पंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५६ ॥

भीष्मउवाच सवनानिविचित्राणितीर्थानिचसरांसिच ॥ अभिगच्छन्क्रमेणस्मकंचिन्मुनिमुपस्थितः ॥ १ ॥ तंसतेनयथोद्दिष्टंनागंविप्रेणब्राह्मणः ॥ पर्यपृ

च्छद्यथान्यायंश्रुत्वैवचजगामसः ॥ २ ॥ सोभिगम्ययथान्यायंनागायतनमर्थवित् ॥ प्रोक्तवानहमस्मीतिभोःशब्दालंकृतंवचः ॥ ३ ॥ ततस्तस्यवचनंश्रुत्वारूपि

णीधर्मवत्सला ॥ दर्शयामासतंविप्रंनागपत्नीपतिव्रता ॥ ४ ॥ सातस्मैविधिवत्पूजांचक्रेधर्मपरायणा ॥ स्वागतेनागतंकृत्वाकिंकरोमीतिचाब्रवीत् ॥ ५ ॥ ब्राह्म

णउवाच विश्रांतोभ्यर्चितश्चास्मिभवत्याश्लक्ष्णयागिरा ॥ द्रष्टुमिच्छामिभवतिदेवंनागमनुत्तमं ॥ ६ ॥ एतद्धिपरमंकार्यमेतन्मेपरमेप्सितं ॥ अनेनचार्थे

नास्म्यद्यसंप्राप्तःपन्नगाश्रमं ॥ ७ ॥ नागभार्योवाच आर्यःसूर्यरथंवोढुंगतोसौमासचारिकः ॥ सप्ताष्टभिर्दिनैर्विप्रदर्शयिष्यत्यसंशयं ॥ ८ ॥ एतद्विदितं

मार्यस्यविवासकरणंतव ॥ भर्तुर्भवतुकिंचान्यत्क्रियतांतद्वदस्वमे ॥ ९ ॥ ब्राह्मणउवाच अनेननिश्चयेनाहंसाध्विसंप्राप्तवानिह ॥ प्रतीक्षन्नागमंदेवि

वत्स्याम्यस्मिन्महावने ॥ १० ॥ संप्राप्तस्यैवचाव्यग्रमावेद्योहमिहागतः ॥ ममाभिगमनंप्राप्तोवाच्यश्चवचनंत्वया ॥ ११ ॥ अहमप्यत्रवत्स्यामिगोमत्याः

पुलिनेशुभे ॥ कालंपरिमिताहारोयथोक्तंपरिपालयन् ॥ १२ ॥ ततःसविप्रस्तांनागींसमाधायपुनःपुनः ॥ तदेवपुलिनंनद्याःप्रययौब्राह्मणर्षभः ॥ १३ ॥ इति

श्रीम० शां० मोक्ष० प० उंछवृत्त्युपाख्यानेसप्तपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५७ ॥ ॥ ७ ॥ भीष्मउवाच अथतेननरश्रेष्ठब्राह्मणेनतपस्वि

ना ॥ निराहारेणवसतादुःखितास्तेभुजंगमाः ॥ १ ॥ सर्वेसंभूयसहितास्तस्यनागस्यबांधवाः ॥ भ्रातरस्तनयाभार्यायुस्तंब्राह्मणंप्रति ॥ २ ॥ तेपश्यन्पुलिनेतं

वैविविक्तेनियतव्रतं ॥ समासीनंनिराहारंद्विजंजप्यपरायणं ॥ ३ ॥ तेसर्वेसमतिक्रम्यविप्रमभ्यर्च्यचासकृत् ॥ ऊचुर्वाक्यमसंदिग्धमातिथेयस्यबांधवाः ॥ ४ ॥

षष्ठोहिदिवसस्तेद्यप्राप्तस्येहतपोधन ॥ नचाभिभाषसेकिंचिदाहारंधर्मवत्सल ॥ ५ ॥

णं ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ इतिशांति० मो० नै० भा० सप्तपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५७ ॥ ॥ ७ ॥ अथेति ॥ १ ॥ २ ॥ ३ ॥ समतिक्रम्यउपेत्य ॥ ४ ॥ ५ ॥ * संश्रयंगृहं

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ इतिशांति॰मो॰नै॰भा॰अष्टपंचाशदधिकत्रिशततमोऽध्यायः ॥ ३५८ ॥ ॥ ५ ॥ ॥ ९ ॥ अयेति ॥ १ ॥ २ ॥

अस्मानभिगतश्चासिवयंचत्वामुपस्थिताः ॥ कार्यंचातिथ्यमस्माभिर्वयंसर्वेकुटुंबिनः ॥ ६ ॥ मूलंफलंवापर्णंवापयोवाद्विजसत्तम ॥ आहारहेतोरन्नंवाभो
कुमर्हसिब्राह्मण ॥ ७ ॥ त्यक्ताहारेणभवतावनेनिवसतात्वया ॥ बालवृद्धमिदंसर्वंपीड्यतेधर्मसंकरात् ॥ ८ ॥ नहिनोभ्रूणहाकश्चिज्जातापत्यनृतोऽपिवा ॥ पूर्वाशी
वाकुलेत्यस्मिन्देवतातिथिबंधुषु ॥ ९ ॥ ब्राह्मणउवाच उपदेशेनयुष्माकमाहारोयंकृतोमया ॥ द्विरूनंदशरात्रंवैनागस्यागमनंप्रति ॥ १० ॥ यद्यष्टरात्रेऽति
क्रांतेनागमिष्यतिपन्नगः ॥ तदाहारंकरिष्यामितन्निमित्तमिदंव्रतं ॥ ११ ॥ कर्तव्योनचसंतापोगम्यतांचयथागतं ॥ तन्निमित्तमिदंसर्वंनैतद्भेत्तुमिहार्हथ ॥ १२ ॥
तेतेनसमनुज्ञाताब्राह्मणेनभुजंगमाः ॥ स्वमेवभवनंजग्मुरकृतार्थानरर्षभ ॥ १३ ॥ इतिश्रीमहाभारतेशांति॰मोक्ष॰उंछवृत्त्युपाख्यानेअष्टपंचाशदधिकत्रि
शततमोऽध्यायः ॥ ३५८ ॥ ॥ ५ ॥ भीष्मउवाच अथकालेबहुतिथेपूर्णेप्राप्तोभुजंगमः ॥ दत्ताभ्यनुज्ञःस्वंवेश्मकृतकर्माविवस्वता ॥ १ ॥ तंभार्याप्युपच
क्रामपादशौचादिभिर्गुणैः ॥ उपपन्नांचतांसाध्वींपन्नगःपर्यपृच्छत ॥ २ ॥ अथत्वमसिकल्याणिदेवतातिथिपूजने ॥ पूर्वमुक्तेनविधिनायुक्तायुक्तेनतत्समं ॥
॥ ३ ॥ नखल्वस्यकृतार्थेनस्त्रीबुद्ध्यामार्दवीकृता ॥ मद्वियोगेनसुश्रोणिविमुक्ताधर्मसेतुना ॥ ४ ॥ नागभार्योवाच शिष्याणांगुरुशुश्रूषाविप्राणांवेदधा
रणं ॥ भृत्यानांस्वामिवचनंराज्ञोलोकानुपालनं ॥ ५ ॥ सर्वभूतपरित्राणंक्षत्रधर्मइहोच्यते ॥ वैश्यानांयज्ञसंवृत्तिरातिथेयसमन्विता ॥ ६ ॥ विप्रक्षत्रियवैश्यानां
शुश्रूषाशूद्रकर्मतत् ॥ गृहस्थधर्मोनागेंद्रसर्वभूतहितैषिता ॥ ७ ॥ नियताहारतानित्यंव्रतचर्यायथाक्रमं ॥ धर्मोहिधर्मसंबंधादिंद्रियाणांविशेषतः ॥ ८ ॥ अहंक
स्यकुतो[illegible]कःकोमेहभवेदिति ॥ प्रयोजनमतिर्नित्यमेवंमोक्षाश्रमेवसेत् ॥ ९ ॥ पतिव्रतात्वंभार्यायाःपरमोधर्मउच्यते ॥ तवोपदेशान्नागेंद्रतच्चतत्त्वेनवेद्मि
वै ॥ १० ॥ [illegible]धर्मविजानंतीधर्मनित्येत्वयिस्थिते ॥ सत्पथंकथमुत्सृज्ययास्यामिविपथंपथः ॥ ११ ॥ देवतानांमहाभागधर्मचर्यानहीयते ॥ अतिथीनांचस
त्कारेनित्ययुक्तास्म्यतंद्रिता ॥ १२ ॥ सप्ताष्टदिवसास्त्वद्यविप्रस्येहागतस्यवै ॥ तच्चाकार्यंनमेख्यातिदर्शनंतवकांक्षति ॥ १३ ॥

॥ ३ ॥ अकृतार्थेनधर्मसेतुना ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ मेमांप्रति ख्यातिकथयति ॥ १३ ॥

१२

प्रस्थाप्योमत्सकाशंससंप्रा

॥२८७॥ गोमत्यास्त्वेषपुलिनेत्वद्दर्शनसमुत्सुकः॥ आसीनोवर्तयन्ब्रह्मब्राह्मणःसंशितव्रतः॥ १४ ॥ अहंत्वनेननागेंद्रसत्यपूर्वंसमाहिता ॥

इतिश्रीमहाभारतेशांति० मोक्ष० उंछवृत्त्यु सोभुजगोत्तमः॥ १५ ॥ एतच्छ्रुत्वामहाप्राज्ञतत्रगंतुंत्वमर्हसि॥ दातुमर्हसिवातस्यदर्शनंदर्शनश्रवः ॥ १६ ॥

मानुषंकेवलंविप्रंदेवंवाथशुचि पाख्यानेऊनषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३५९ ॥ ॥ ७ ॥ नागउवाच अथब्राह्मणरूपेणकंतंसमनुपश्यसि ॥

ननुनागाम स्मिते ॥ १ ॥ कोहिमांमानुषःशक्तोद्रष्टुकामोयशस्विनि ॥ संदर्शनरुचिर्वाक्यमाज्ञापूर्वंवदिष्यति ॥ २ ॥ सुरासुरगणानांचदेवर्षीणांचभाविनि ॥

आर्जवेन हावीर्याःसौरभेयास्तरस्विनः ॥ ३ ॥ वंदनीयाश्चवरदावयमप्यनुयायिनः ॥ मनुष्याणांविशेषेणनावेक्ष्याइतिमेमतिः ॥ ४ ॥ नागभार्योवाच

वर्षवर्षप्रियःपश्चीदर्शनंत विजानामिनासौदेवोनिलाशन ॥ एकंतस्मिन्विजानामिभक्तिमानतिरोषण ॥ ५ ॥ सहिकार्यांतराकांक्षीनलेप्सुःस्तोककोयथा ॥

आशाच्छेद वकांक्षति ॥ ६ ॥ हित्वात्वद्दर्शनंकिंचिद्विघ्नंनप्रतिपालयेत् ॥ तुल्योप्यभिजनेजातोनकश्चित्पर्युपास्ते ॥ ७ ॥ तद्रोषंसहजंत्यक्त्वात्वमेनंद्रष्टुमर्हसि ॥

मौनेज्ञानफलावाप्तिर्दानेनचयं नतस्याद्यनात्मानंदग्धुमर्हसि ॥ ८ ॥ आशयाह्यभिपन्नानामकृत्वाश्रुप्रमार्जनं ॥ राजावाराजपुत्रोवाभ्रूणहत्यैवयुज्यते ॥ ९ ॥

अभि शोमहत् ॥ वाग्मित्वंसत्यवाक्येनपरत्रचमहीयते ॥ १० ॥ भूप्रदानेनचगतिंलभत्याश्रमसंमितां ॥ न्याय्यस्यार्थस्यसंप्राप्तिंकृत्वाफलमुपाश्नुते ॥ ११ ॥

रो प्रेतामसंश्लिष्टांकृत्वाचात्महितांक्रियां ॥ नयातिनिरयंकश्चिदितिधर्मविदोविदुः ॥ १२ ॥ नागउवाच अभिमानैर्नमानोमेजातिदोषेणवैमहान् ॥

षःसंकल्पजःसाध्विदग्धोवागग्निनात्वया ॥ १३ ॥ ॥२८७

धवहाः ॥ ३ ॥ ४ ॥ ५ ॥ स्तोककःचातकः ॥ ६ ॥ हित्वाविना प्रतिपालयेत्प्राप्नुयात् त्वद्दर्शनंविनास्यकोपिविघ्नोमाभूदित्यर्थः अभिजनेसद्वंशेजातस्तुल्योपिअन्योनागोपिकश्चित्नपर्युपासतपारत्यज्य

नश्चास्ते अतिथित्यक्त्वानकश्चित्त्वकुलेआस्तेइत्यर्थः ॥ ७ ॥ सहजंसर्पत्वजातिजं ॥ ८ ॥ भ्रूणहत्यैवभ्रूणहत्ययैव ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

नचरोषादहंसाध्विपश्येयमधिकंतमः॥ तस्यैवंवक्तव्यतांयातिविशेषेणभुजंगमाः॥ १४॥ रोषस्यहिवशंगत्वादशग्रीवःप्रतापवान्॥ तथाशक्रप्रतिस्पर्धीहतोरामे
णसंयुगे॥ १५ ॥ अंतःपुरगतंवत्संश्रुत्वारामेणनिर्हतं॥ धर्षणारोषसंविग्नाःकार्तवीर्यसुताहताः ॥ १६ ॥ जामदग्न्येनरामेणसहस्रनयनोपमः॥ संयुगेनिहतो
रोषात्कार्तवीर्योमहाबलः ॥ १७॥ तदेषतपसांशत्रुःश्रेयसांविनिपातकः॥ निगृहीतोमयारोषःश्रुत्वैवंवचनंतव ॥ १८ ॥ आत्मानंचविशेषेणप्रशंसाम्यनपा
यिनि॥ यस्यमेत्वंविशालाक्षिभार्यागुणसमन्विता ॥ १९ ॥ एषतत्रैवगच्छामियत्रतिष्ठत्यसौद्विजः॥ सर्वथाचोक्तवान्वाक्यंसकृतार्थःप्रयास्यति॥ २०॥ इ
तिश्रीमहाभारतेशांति० मोक्ष० उंछवृत्त्युपाख्यानेषष्ट्यधिकत्रिशततमोऽध्यायः॥ ३६०॥ ॥७॥ भीष्मउवाच सपन्नगपतिस्तत्रप्रययौब्राह्मणंप्र
ति॥ तमेवमनसाध्यायन्कार्यवत्तांविचारयन्॥ १ ॥ तमतिक्रम्यनागेंद्रोमतिमान्सनरेश्वर॥ प्रोवाचमधुरंवाक्यंप्रकृत्याधर्मवत्सलः॥ २ ॥ भोभोक्षाम्याभि
भाषेत्वांनरोषंकर्तुमर्हसि॥ इहत्वमभिसंप्राप्तःकस्यार्थेकिंप्रयोजनं॥ ३॥ आभिमुख्यादभिक्रम्यस्नेहात्पृच्छामितेद्विज ॥ विविक्तेगोमतीतीरेकंवात्वंपर्युपास
से॥ ४॥ ब्राह्मणउवाच धर्मारण्यंहिमांविद्धिनागंद्रष्टुमिहागतं॥ पद्मनाभंद्विजश्रेष्ठतत्रमेकार्यमाहितं॥ ५॥ तस्यचाहमसांनिध्येश्रुतवानस्मितंगतं॥
स्वजनात्तंप्रतीक्षामिपर्जन्यमिवकर्षकः॥ ६॥ तस्यचाक्लेशकरणंस्वस्तिकारसमाहितं॥ आवर्तयामितद्ब्रह्मयोगयुक्तोनिरामयः॥ ७॥ नागउवाच अहो
कल्याणवृत्तस्त्वंसाधुःसज्जनवत्सलः॥ अवाच्यस्त्वंमहाभागपरंस्नेहेनपश्यसि॥ ८॥ अहंसनागोविप्रर्षेयथामांविंदतेभवान्॥ आज्ञापययथास्वैरंकिंकरोमि
प्रियंतव॥ ९ ॥ भवंतंस्वजनादस्मिसंप्राप्तंश्रुतवानहं॥ अतस्त्वांस्वयमेवाहंद्रष्टुमभ्यागतोद्विज॥ १०॥ संप्राप्तश्चभवानद्यकृतार्थःप्रतियास्यति ॥ विस्रब्धोमां
द्विजश्रेष्ठविषयेयोक्तुमर्हसि॥ ११ ॥ वयंहिभवतासर्वेगुणक्रीताविशेषतः॥ यस्त्वमात्महितंत्यक्त्वामामेवेहानुरुध्यसे ॥ १२॥

मत्तइति मम आरा० एवंविधोपिचलच्चित्तंवासार्थिमंगृहासक्तमपिमहाप्रज्ञंगूढ्दोषंदर्शितंउपास्मिह तथाचेनरं
... अर्चनिमिन्नः ॥ १३ ॥ आत्मानंब्रह्मआ जीवस्यगतिविश्रांतिस्थानं आत्मस्थोविषयेभ्योव्यावृत्तः ॥ इतिशांति० मो० नै० भा० एकषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६१ ॥ ॥ ७ ॥ विवस्वतइति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ तवातपुरावातादि
कोनापिविरक्तोस्मीत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥

१२८८ ब्राह्मणउवाच आगतोहंमहाभागतवदर्शनलालसः ॥ कंचिदर्थमनर्थज्ञःप्रष्टुकामोभुजंगम ॥ १३ ॥ अहमात्मानमात्मस्थोमार्गमाणोत्मनोगतिं ॥ वासा
र्थिनंमहाप्रज्ञंचलच्चित्तमुपास्मिह ॥ १४ ॥ प्रकाशितस्त्वंसगुणैर्यशोगर्भगभस्तिभिः ॥ शशांककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः ॥ १५ ॥ तस्यमेप्रश्नमुत्पन्नंछिंधि
त्वमनिलाशन ॥ पश्चात्कार्यंवदिष्यामिश्रोतुमर्हतितद्भवान् ॥ १६ ॥ इतिश्रीमहाभारतेशांति० मोक्ष० उंछ० एकषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६१ ॥
ब्राह्मणउवाच विवस्वतोगच्छतिपर्ययेणवोढुंभवांस्तंरथमेकचक्रं ॥ आश्चर्यभूतंयदितत्रकिंचिद्दृष्टंत्वयाशंसितुमर्हसित्वं ॥ १ ॥ नागउवाच श्रियश्च
र्याणामनेकानांप्रतिष्ठाभगवान्रविः ॥ यतोभूताःप्रवर्तंतेसर्वेत्रैलोक्यसंमताः ॥ २ ॥ यस्यरश्मिसहस्रेषुशाखास्विवविहंगमाः ॥ वसंत्याश्रित्यमुनयःसंसिद्धा
दैवतैःसह ॥ ३ ॥ यतोवायुर्विनिःसृत्यसूर्यरश्म्याश्रितोमहान् ॥ विजृंभत्यंबरेतत्रकिमाश्चर्यमतःपरं ॥ ४ ॥ विभज्यतंतुविप्रर्षेप्रजानांहितकाम्यया ॥ तोयंसृजति
वर्षासुकिमाश्चर्यमतःपरं ॥ ५ ॥ यस्यमंडलमध्यस्थोमहात्मापरमत्विषा ॥ दीप्तःसमीक्षतेलोकान्किमाश्चर्यमतःपरं ॥ ६ ॥ शुक्रोनामासितःपादोयश्चवारिधरो
वरे ॥ तोयंसृजतिवर्षासुकिमाश्चर्यमतःपरं ॥ ७ ॥ योष्टमासांस्तुशुचिनाकिरणेनोक्षितंपयः ॥ प्रत्यादत्तेपुनःकालेकिमाश्चर्यमतःपरं ॥ ८ ॥ यस्यतेजोविशेषे
षुस्वयमात्माप्रतिष्ठितः ॥ यतोबीजंमहीचेयंधार्यतेसचराचरं ॥ ९ ॥ यत्रदेवोमहाबाहुःशाश्वतःपुरुषोत्तमः ॥ अनादिनिधनोविप्रकिमाश्चर्यमतःपरं ॥ १० ॥
आश्चर्याणामिवाश्चर्यमिदमेकंतुमेशृणु ॥ विमलेयन्मयादृष्टमंबरेसूर्यसंश्रयात् ॥ ११ ॥ पुरामध्यान्हसमयेलोकांस्तपतिभास्करे ॥ प्रत्यादित्यप्रतीकाशःसर्व
तःसमदृश्यत ॥ १२ ॥ सलोकांस्तेजसासर्वान्स्वभासानिर्विभासयन् ॥ आदित्याभिमुखोभ्येतिगगनंपाटयन्निव ॥ १३ ॥

रूपेणविभज्यपरिणामंनीत्वा ॥ ५ ॥ महात्मांतर्यामी ॥ ६ ॥ पादइवपादोऽवयवःनीलमेघरूपेणाप्ययमेववर्षतीत्यर्थः ॥ ७ ॥ ८ ॥ यतःसूर्यात् बीजंऔषधं ॥ ९ ॥ १० ॥ ११ ॥ प्रत्यादित्यप्रतीकाशः ॥२८८
आदित्यांतरतुल्यतेजस्कः समदृश्यतदृष्टः ॥ १२ ॥ सइति तदेवभूतंपरामृश्यते ॥ १३ ॥

हुताहुतिरिवज्योतिर्व्याप्यतेजोमरीचिभिः ॥ अनिर्देश्येनरूपेणद्वितीयइवभास्करः ॥ १४ ॥ तस्याभिगमनप्राप्तोहस्तो दत्तो विवस्वता ॥ तेनापिदक्षिणोहस्तो
दत्तःप्रत्यर्चितार्थिना ॥ १५ ॥ ततोभित्वैवगगनंप्रविष्टोरश्मिमंडलं ॥ एकीभूतंचतत्तेजःक्षणेनादित्यतांगतं ॥ १६ ॥ तत्रनःसंशयोजातस्तयोस्तेजःसमाग
मे ॥ अनयोःकोभवेत्सूर्योरथस्थोयोयमागतः ॥ १७ ॥ तेवयंजातसंदेहाःपर्यपृच्छामहेरविं ॥ कएषदिवमाक्रम्यगतःसूर्यइवापरः ॥ १८ ॥ इतिश्रीमहा
भारतेशां०मोक्ष०पर्वणिउंछवृत्त्युपाख्यानेद्विषष्ट्यधिकत्रिशततमोध्यायः ॥ ३६२ ॥ ॥ ७ ॥ सूर्यउवाच नैषदेवोनिलसखोनासुरोनचपन्नगः ॥ उंछवृत्तिव्रतेसिद्धोमुनिरेषदिवंगतः ॥ १ ॥ एषमूलफलाहारःशीर्णपर्णाशनस्तथा ॥ अब्भक्षोवायुभक्षश्चआसीद्विप्रःसमाहितः ॥ २ ॥ भवश्चानेन
विप्रेणसंहिताभिरभिष्टुवः ॥ स्वर्गद्वारेकृतोद्योगोयेनासौत्रिदिवंगतः ॥ ३ ॥ असंगतिरनाकांक्षीनित्यमुंछशिलाशनः ॥ सर्वभूतहितेयुक्तएषविप्रोभुजंग
मः ॥ ४ ॥ नहिदेवानगंधर्वानासुरानचपन्नगाः ॥ प्रभवंतीहभूतानांप्राप्तानामुत्तमांगतिं ॥ ५ ॥ एतदेवंविधंदृष्टमाश्चर्यंतत्रमेद्विज ॥ संसिद्धोमानुषःकामं
योसौसिद्धगतिंगतः ॥ सूर्येणसहितोब्रह्मन्पृथिवींपरिवर्तते ॥ ६ ॥ इतिश्रीमहाभारतेशांति०मोक्ष०उंछवृत्त्युपाख्यानेत्रिषष्ट्यधिकत्रिशततमोऽध्यायः ३६३ ॥
ब्राह्मणउवाच आश्चर्यंनात्रसंदेहःसुप्रीतोस्मिभुजंगम ॥ अन्वर्थोपगतैर्वाक्यैःपंथानंचास्मिदर्शितः ॥ १ ॥ स्वस्तितेस्तुगमिष्यामिसाधोभुजग
सत्तम ॥ स्मरणीयोस्मिभवतासंप्रेषणनियोजनैः ॥ २ ॥ नागउवाच अनुक्त्वाहृद्गतंकं क्वेदानींप्रस्थितोभवान् ॥ उच्यतांद्विजयत्कार्यंयदर्थंत्वमिहागतः
॥ ३ ॥ उक्तेकृतेकार्येमामामंत्र्यद्विजर्षभ ॥ मयाप्रत्यभ्यनुज्ञातस्ततोयास्यसिसुव्रत ॥ ४ ॥ नहिमांकेवलंदृष्ट्वात्यक्त्वाप्रणयवानिह ॥ गंतुमर्हसिविप्रर्षेवृक्ष
मूले ... ॥

अहंत्वयिभक्तिमानितिशेषः मयिमित्रस्सावका पतानकापात्यर्थः ॥ ६ ॥ ७ ॥ सएवत्वमिति यन्त्त्वदामहाबाहुःशाश्वतःपुरु
षमउक्तःसएवत्वंसएवचाहं सयश्चायंपुरुषे यश्चासावादित्ये सएकइतिश्रुतयादित्यपुरुषयोरभेदावगमात्कारणात्मनाऽभेदेऽपिकार्यात्मनाआवयोर्भेदोभविष्यतीत्याशंक्याह याहंसएवभवानाप तुशब्दःअवधारणे
एतेनभेदाभेदपक्षोनिरस्तः भूतानिवियदादीनि सर्वेयत्रगताःप्रलयकालेतदेवब्रह्मस्मइत्यर्थः एतच्चउंछवृत्तेःसूर्यप्रवेशमात्रश्रवणेनैवज्ञातंनिश्चितंचवेदवाक्यादितिभावः ॥ ८ ॥ भोगपतेभोगोहिंकुलंतत्पते भो
गिपतेइतिस्वच्छःपाठः ॥ ९ ॥ १० ॥ इतिशांति०मो०नै०भा०चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥ ॥ १ ॥ सचेतिदीक्षाक्षौरप्रायश्चित्तादिपूर्वमुंछव्रतस्वीकारस्तदर्थी ॥ २ ॥ तदनेनप्रबं

त्वयिचाहंद्विजश्रेष्ठभवान्मयिनसंशयः ॥ लोकोयंभवतःसर्वःकाचिंतामयितेनघ ॥ ६ ॥ ब्राह्मणउवाच एवमेतन्महाप्राज्ञविदितात्मन्भुजंगम ॥ नातिरिक्ता
स्त्वयादेवाःसर्वथैवयथातथं ॥ ७ ॥ सएवत्वंसएवाहंयोहंसतुभवानपि ॥ अहंभवांश्चभूतानिसर्वेयत्रगताःसदा ॥ ८ ॥ आसीत्तुमेभोगपतेसंशयःपुण्यसंचये ॥
सोहमुंछव्रतंसाधोचरिष्याम्यर्थसाधनं ॥ ९ ॥ एषमेनिश्चयःसाधोकृतंकारणमुत्तमं ॥ आमंत्रयामिभद्रंतेकृतार्थोस्मिभुजंगम ॥ १० ॥ इतिश्रीमहाभारते
शांति०मोक्ष०उंछवृत्त्युपाख्यानेचतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥ ॥ ९ ॥ भीष्मउवाच सचामंत्र्योरगश्रेष्ठंब्राह्मणःकृतनि
श्चयः ॥ दीक्षाकांक्षीतदाराजंश्च्यवनंभार्गवंश्रितः ॥ १ ॥ सतेनकृतसंस्कारोधर्ममेवाधितस्थिवान् ॥ तथैवचकथामेतांराजन्कथितवांस्तदा ॥ २ ॥ भार्गवेणा
पिराजेंद्रजनकस्यनिवेशने ॥ कथैपाकथितापुण्यानारदायमहात्मने ॥ ३ ॥ नारदेनापिराजेंद्रदेवेंद्रस्यनिवेशने ॥ कथिताभरतश्रेष्ठपृष्टेनाक्लिष्टकर्मणा ॥ ४ ॥
देवराजेनचपुराकथितैषाकथाशुभा ॥ समस्तेभ्यःप्रशस्तेभ्योविप्रेभ्योवसुधाधिप ॥ ५ ॥

धेनयद्यपिसर्वेष्वाश्रमेषुमोक्षोस्तितथापिगार्हस्थ्यमेवस्वाध्यायव्रतयमनियमशमदमाद्युपेतमाश्रमांतरधर्माणामाश्रयइतितत्रैवकात्स्न्येनसर्वेधर्माः संभवंतीतितेनैवोपसंहारःकृतः यथाछांदोग्येब्रह्मसंस्थोऽमृतत्व
मेतीतिसंन्यासोत्कर्षप्रतिपादकेवाक्येसत्यपिआचार्यकुलाद्वेदमधीत्ययथाविधानंगुरोःकर्मातिशेषेणाभिसमावृत्यकुटुंबेशुचौदेशेस्वाध्यायमधीयानोधार्मिकान्विदधदात्मनिसर्वेंद्रियाणिसंप्रतिष्ठाप्याहिंसन्सर्वा
णिभूतान्यन्यत्रतीर्थेभ्यःसखल्वेवंवर्तयन्यावदायुषंब्रह्मलोकमभिसंपद्यतेनचपुनरावर्ततेनचपुनरावर्ततइतिगृहिणैवोपसंहारःकृतःतत्रैवकृत्स्नाश्रमधर्मसमाप्तेः यथोक्तंभगवताबादरायणेन कृत्स्नभावात्तुगृहिणोप
संहारइति तथेहापिसुलभाजनकसंवादेसंन्यासस्याधिक्येसिद्धेपिउंछवृत्त्युपाख्यानेनगृहिणैवोपसंहारःप्रदर्शितः अतिशेषेणनिःशेषेणकृत्वेत्यध्याहार्यं ॥ १ ॥ धार्मिकान्पुण्यावहान्पृथग्धर्मान् सर्वेंद्रियाणिसंप्रतिष्ठाप्ये
त्यनेनयोगउक्तः तीर्थेभ्यःयज्ञेभ्यइतिश्रुतिपदानामर्थः यत्रकुत्राप्याश्रमेजितेंद्रियोध्याननिष्ठोमुच्यतइत्युक्तंभवति तथैवचकथामेतामित्यादिनाकथाप्रशंसैव ॥ १२ ॥ ३ ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ परकृतिस्वरूपेणार्थवादेन निष्कामस्वकर्मैव जितेंद्रियेण कर्त्तव्यं तद्देवगोचरमित्याशयेनार्द्धेनाहासीदिति ॥ ८ ॥ उपसंहरति सचेति यमाः अहिंसादयः नियमाः शौचादयः वनांतरं वनमध्यं प्रविष्टः उंछः कणश आदानं कणिशाद्यर्जनं शिलं परिगणितं परिमितमुंछशिलार्जितमन्नमश्नन् फणिपत्युक्तामुंछवृत्तिं गतिं प्रापेति शेषः ॥ ९ ॥ वेदांतेलक्ष्मणार्यक्रतुविधिविद्वतौ तीर्थनारायणार्यतर्के धीरेशमिश्रान्फणि

यदा च मम रामेण युद्धमासीत्सुदारुणं ॥ वसुभिश्च तदा राजन्कथेयं कथिता मम ॥ ६ ॥ पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव ॥ कथेयं कथिता पुण्या धर्म्या धर्मभृतां वर ॥ ७ ॥ यदयं परमो धर्मो यन्मां पृच्छसि भारत ॥ आसीद्वीरो ह्यनाकांक्षी धर्मार्थकरणे नृप ॥ ८ ॥ स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशितात्मकृत्यः ॥ यमनियमसहो वनांतरं परिगणितोंछशिलाशनः प्रविष्टः ॥ ९ ॥ इतिश्रीमहाभारते शतसाहस्र्यां संहितायां वैयासक्यां शांति० मोक्ष० उंछवृत्त्युपाख्याने पंचषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥ ॥ ७ ॥ ॥ ७ ॥ अस्यानंतरमनुशासनपर्व भविष्यति तस्यायमाद्यः श्लोकः ॥ युधिष्ठिरउवाच शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ॥ न च मे हृदये शांतिरस्ति श्रुत्वेदमीदृशं ॥ १ ॥

पतिभणितौ पोलगंगाधरार्यं ॥ वेदे सांगे पितृव्यं शिवमथ पितरं दक्षिणामूर्त्तुपास्तौ श्रौते चिंतामणिं यः शरणमुपगतो भूम्निमोपालदेवं ॥ १ ॥ व्याकरोन्मोक्षधर्मान्स नीलकंठः समासतः ॥ अनेन प्रीयतां देवो गिरिजापतिरव्ययः ॥ २ ॥ इतिश्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविंदसूरिसूनोः श्रीनीलकंठस्य कृतौ भारतभावदीपे मोक्षधर्मपर्वार्थप्रकाशे पंचषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥ ॥ ७ ॥ समाप्तेयं टीका शुभमस्तु ॥ १ ॥

॥ अस्मिन्पर्वणि व्यासोक्ताध्यायश्लोकसंख्यान्यूनाधिक्यं चेल्लिपिकरप्रमादात्तद्दोष्यं ॥

इदं शांतिपर्व मुंबय्याख्यराजधान्यां गणपतकृष्णाजीत्यभिधाना मुद्रायंत्रालये मुद्रितं ॥ शकाब्दाः ॥ १७८५ ॥

